ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया
त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

## (A REFEREED QUARTERLY RESEARCH JOURNAL)

३९ वर्षे प्रथमोऽङ्कः ( जनवरीमासाङ्कः ) २०१४ ई०

प्रधानसम्पादकः
प्रो० भवेन्द्रझा
कुलपतिः

सम्पादकः
प्रो० रमेशकुमारपाण्डेयः

सहसम्पादकः
डॉ० ज्ञानधरपाठकः



प्रकाशन-स्थलम्
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानितविश्वविद्यालयः)
नवदेहली-११००१६

ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

## (A REFEREED QUARTERLY RESEARCH JOURNAL)

३९ वर्षे प्रथमोऽङ्कः (जनवरीमासाङ्कः) २०१४ ई०





प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

प्रकाशकः
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानित-विश्वविद्यालयः)
कुतुब इन्स्टीट्यूशनल एरिया,
नवदेहली-११००१६



ISSN :- 0974 - 8946

३९ वर्षे प्रथमोऽङ्कः (जनवरीमासाङ्कः) २०१४ ई०



मुद्रकः
अमरप्रिंटिंगप्रैसः
दिल्ली
amarprintingpress@gmail.com

प्रधानसम्पादकः

**प्रो० भवेन्द्रझा**

कुलपतिः

**सम्पादकः**

प्रो० रमेशकुमारपाण्डेयः

**सम्पादकमण्डलम्**

प्रो० (श्रीमती) अमिता शर्मा

प्रो० जयकान्तसिंहशर्मा

प्रो० हरेरामत्रिपाठी

**सहसम्पादकः**

डॉ० ज्ञानधरपाठकः

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ**, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# पुरोवाक्

अध्यात्मपरायणा त्यागमूला समन्वयात्मिका सहिष्णुतासंयुता भारतीयसंस्कृतिः विश्वस्मिन् विश्वे अनुपमा वर्तते। 'वसुधैव कुटुम्बकम्', 'यत्र विश्वं भवत्येकनीडम्', 'मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षे', संगच्छध्वं संवदध्वम्--''सर्वे भवन्तु सुखिनः'' इत्यादिवाक्यख्यापिताया: विश्वबन्धुत्वभावनायाः परिकल्पना अस्याः सर्वातिशायि महत्त्वं द्योतयति। सम्प्रति सर्वे देशा भूमण्डलीकरणाय प्रयतन्ते। विविधराष्ट्रेषु ऐक्यं विचारसाम्यं सहभागित्वं समन्वयं सहिष्णुतां पारस्परिकसद्भाववृत्तिञ्च प्रतिष्ठापयितुं प्रयासो विधीयते।

संसारेऽस्मिन् विलसन्ति स्वाभिप्रायाभिव्यक्तिसाधनभूता विभिन्नाभाषाः। तासु भाषासु संस्कृतभाषा सर्वोपरि वर्तते। केचन विदेशीया विद्वांसः इयं मृतभाषा इतिप्रचारमकुर्वन्। इयं भाषा न कदापि व्यवहारभाषा आसीदिति तेषां मतम्। परं यदि वयं प्राचीनसंस्कृतव्याकरणसाहित्यादिशास्त्रग्रन्थान् सम्यगवलोकयामः तदा अस्माभिरिदं स्पष्टतयाऽवगम्यते यदियं भाषा व्यवहारभाषा आसीदिति। भगवता पाणिनिना स्वीयाष्टाध्याय्यां च्छन्दसि, भाषायाम् इति विभागं कृत्वैव शब्दानामन्वाख्यानमक्रियत। अत्र भाषा नाम लौकिकी भाषा एवं या लौकिकी भाषा सैव व्यावहारिकी भाषा इत्यर्थः। भगवता पतञ्जलिना विरचितमहाभाष्यादपि स्पष्टं प्रतीयते यत् संस्कृतं भाषितंभाषा आसीदिति।

परकीयशासनवशात् जीवन्त्याः अपि अस्याः देववाण्याः अभिवृद्धिकार्यं किञ्चित् कुण्ठितमासीत्। अस्याः भाषायाः अभिवृध्यै स्वातन्त्र्योत्तरभारते सर्वकारेण स्वयंसेवासंस्थाभिश्च नैके कार्यक्रमाः समायोजिताः सन्ति। अद्यावधि यावद्धनं व्ययीकृतं सर्वकारेण यावान् प्रयत्नः विहितः स्वयंसेवासंस्थाभिः तावदभिवृद्धिः संस्कृतस्य न संजाता इति चेखिद्यते न श्चेतः।

संस्कृते न केवलं काव्यसाहित्यविषयकाः ग्रन्थाः सन्ति। परं ज्योतिषशास्त्र-पाकशास्त्र-अर्थशास्त्र-राजनीतिशास्त्रादिविषयकाः ग्रन्था अपि सन्ति। एवमेव भौतिकविज्ञान-रसायनविज्ञान-वैद्यकविज्ञान-खगोलविज्ञान-भूविज्ञान-धातुरसायन-विज्ञान-विषयकाः ग्रन्थाः सन्ति। तेषां विषये विद्यापीठे अनुसन्धानम् भवेत्। एवमेव तादृशग्रन्थानां प्रकाशनार्थमपि विद्यापीठे व्यवस्था भवेत् तादृशः प्रयत्नो विधीयते।

शोधप्रभायाः प्रकाशनसदुद्यमे अनुत्तमं कौशलं प्रकटीकृतवन्तः शोधप्रभासम्पादकाः आचार्यरमेशकुमारपाण्डेयाः समं च सर्वेऽस्या अनुसन्धातारो लेखकाः साधुवादपात्रं सन्ति। इतश्च भूयोऽपि समुज्ज्वलं शास्त्रादिचिन्तनप्रभा शोधप्रभा प्रकटीकरिष्यतीत्याशासे।

**प्रो. भवेन्द्रझा**
कुलपतिः (प्रभारी)

# सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्ण-निबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

संस्कृतिः मानवजीवनस्य शक्तिः, प्रगतेः साधनविभूतिः, राष्ट्रस्य गौरवम्, स्वातन्त्रस्य मूलभित्तिः, 'वसुधैव कुटुम्बकम्' इतिवाक्यस्य स्फूर्तिः विद्यते। अत्यन्तं प्रसिद्धं वाक्यं विद्यते यत्- **भारतस्य प्रतिष्ठे द्वे - संस्कृतं संस्कृतिस्तथा।**

अर्थात् भारतवर्षस्य मूलम् अनयोः द्वयोर्मध्ये प्रतिष्ठितमस्ति। यः कोऽपि भारतस्य सम्यक् स्वरूपम् अवगन्तुमिच्छति तस्य कृते संस्कृतस्य ज्ञानं प्रथममपेक्षते ततः परं संस्कृतेः ज्ञानम्। कारणं सुस्पष्टं विद्यते संस्कृतिबोधकं निखिलं वाङ्मयं श्रुतिस्मृतिपुराणात्मकं संस्कृतभाषामाध्यमेनैव समुपलभ्यते। अतः संस्कृतस्य ज्ञानादृते नास्ति कोऽपि भिन्नो मार्गः भारतीयसंस्कृतेः परिज्ञानाय। संस्कृतिम् अविज्ञाय भारतस्य स्वरूपपरिज्ञानमसम्भवमेव। भारतीयसंस्कृतिः इत्यत्र भारतीयपदेन नायमाशयो यत् संस्कृतितत्त्वानि केवलं भारतीयानां कृते सन्ति अपितु भारतीयज्ञानधाराभिः परिपूतानि सर्वाणि संस्कृतितत्त्वानि वसुन्धरायाः प्रतिकोणं निवसतां जनानां जीवानां च कृते सन्ति। लोककल्याणकारिणीं प्रार्थनां वयं प्रतिदिनं कुर्मो यत्- **सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः। सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःख भाग्भवेत्॥** सार्वभौमिकी इयं प्रार्थना भारतीया भवतु नाम किन्तु पृथिवीनिवासिनां सर्वेषां भद्राय विद्यते। ऋग्वेदस्य दशममण्डलान्तर्गतसंज्ञानसूक्ते विद्यमानस्य मन्त्रस्य भावं पश्यन्तु - **संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्। देवा भागं यथापूर्वे सं जनाना उपासते॥** सर्वेषां मनसि समानभावो भवेत्, परस्परम् ऐक्यम् भवेदिति धिया विहिता इयं प्रार्थना भारतीयसंस्कृतेः वैशिष्ट्यं द्योतयति। अतएवोच्यते -

**सत्याहिंसागुणैः श्रेष्ठा विश्वबन्धुत्वशिंक्षिका।**
**विश्वशान्तिसुखाधात्री भारतीया हि संस्कृतिः॥**

सत्याहिंसादयो गुणाः भारतीयसंस्कृतेः मूले प्रतिष्ठिताः सन्ति। वस्तुतः वैदिककालात् यच्चिन्तनं प्रवृत्तं तत्सर्वम् आध्यात्मिकमेव विद्यते। श्रीमतोऽरविन्दमहर्षेरयमुद्घोषः यत्- 'आध्यात्मिकता एव भारतीयमानसस्य मूलं विद्यते। भारतीयमानसे भौतिकविज्ञानस्यापि बोधः विद्यते किन्तु भौतिकतायाः सार्थक्यम् आध्यात्मिकतां विना न सम्भवति।' आध्यात्मिकतायाः चिन्तनं वेदेभ्यः एव प्रसृतं दृश्यते। एतत्प्रवर्तकं निखिलं वाङ्मयं संस्कृतमयमेव विद्यते। अतः संस्कृतेन सह भारतीयसंस्कृतेः सम्बन्धः अतीव प्रगाढो वर्तते।

शोधप्रभायाः अस्मिन्नङ्के विविधविषयविश्लेषपरा एकादश लेखाः प्रकाश्यन्ते। एवं प्रतिभाविशेषोद्भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थये सुमनसः विदुषः।

**प्रो. रमेशकुमारपाण्डेयः**
सम्पादकः

# विषयानुक्रमणिका

## संस्कृतविभागः


| | | | |
|---|---|---|---|
| १. | संस्कृतसंस्कृतिसम्बन्धो 'भवानीभारती-सन्दर्भे' | प्रो. रमेशकुमारपाण्डेयः | १ |
| २. | श्रीगोस्वामितुलसीदासचरितमहाकाव्यस्य साहित्यिकं परिशीलनम् | डॉ. सुमनकुमारझा | ७ |
| ३. | भारतीयदर्शनेषु हेत्वाभासविमर्शः | प्रो. हरेरामत्रिपाठी | १७ |
| ४. | आगमशास्त्रे उन्मनी स्थितिः | डॉ. रविशंकरशुक्लः | २८ |
| ५. | जैनदर्शने अभावस्य स्वरूपम् | डॉ. कुलदीपकुमारः | ३३ |
| ६. | शिक्षकाणां भावात्मकबुद्धेः विश्लेषणात्मकमध्ययनम् | श्रीमति सविताराय | ३७ |


## हिन्दी विभाग


| | | | |
|---|---|---|---|
| ७. | अभिज्ञानशाकुन्तल (अङ्क : ५) के पाठभेदों की आलोचना | प्रो. वसन्तकुमार म. भट्ट | ४७ |
| ८. | वैदिक ऋचाओं में उपमा अलङ्कार | डॉ. राजमंगल यादव | ६४ |
| ९. | सौन्दर्य तत्त्व की कलात्मक समीक्षा | डॉ. प्रदीप्त कुमार पण्डा | ७३ |
| १०. | महाभारत में वर्णित विवाह की लोकोपयोगिता | डॉ. ब्रह्मानन्द पाठक | ७९ |
| ११. | शङ्करदर्शनाभिमत प्राणस्वरूपविमर्श | प्रो. सत्यदेव मिश्र | ९८ |

# संस्कृतसंस्कृतिसम्बन्धो 'भवानीभारती-सन्दर्भे'

प्रो. रमेशकुमारपाण्डेयः

श्रुतिस्मृतिपुराणैश्च स्तुता कल्याणदायिनी ।
व्यवहारात्मिका पुण्या भारतीया तु संस्कृतिः ॥

संस्कृतिः मानवजीवनस्य शक्तिः, प्रगतेः साधनविभूतिः, राष्ट्रस्य गौरवम्, स्वातन्त्रस्य मूलभित्तिः, 'वसुधैव कुटुम्बकम्' इतिवाक्यस्य स्फूर्तिः विद्यते। अत्यन्तं प्रसिद्धं वाक्यं विद्यते यत्- **भारतस्य प्रतिष्ठे द्वे - संस्कृतं संस्कृतिस्तथा ।**

अर्थात् भारतवर्षस्य मूलम् अनयोः द्वयोर्मध्ये प्रतिष्ठितमस्ति। यः कोऽपि भारतस्य सम्यक् स्वरूपम् अवगन्तुमिच्छति तस्य कृते संस्कृतस्य ज्ञानं प्रथममपेक्षते ततः परं संस्कृतेः ज्ञानम्। कारणं सुस्पष्टं विद्यते संस्कृतिबोधकं निखिलं वाङ्मयं श्रुतिस्मृतिपुराणात्मकं संस्कृतभाषामाध्यमेनैव समुपलभ्यते। अतः संस्कृतस्य ज्ञानादृते नास्ति कोऽपि भिन्नो मार्गः भारतीयसंस्कृतेः परिज्ञानाय। संस्कृतिम् अविज्ञाय भारतस्य स्वरूपपरिज्ञानमसम्भवमेव।

भारतीयसंस्कृतिः इत्यत्र भारतीयपदेन नायमाशयो यत् संस्कृतितत्त्वानि केवलं भारतीयानां कृते सन्ति अपितु भारतीयज्ञानधाराभिः परिपूतानि सर्वाणि संस्कृतितत्त्वानि वसुन्धरायाः प्रतिकोणं निवसतां जनानां जीवानां च कृते सन्ति। लोककल्याणकारिणीं प्रार्थनां वयं प्रतिदिनं कुर्मो यत्-

**सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःख भाग्भवेत् ॥**

सार्वभौमिकी इयं प्रार्थना भारतीया भवतु नाम किन्तु पृथिवीनिवासिनां सर्वेषां भद्राय विद्यते।

ऋग्वेदस्य दशममण्डलान्तर्गतसंज्ञानसूक्ते विद्यमानस्य मन्त्रस्य भावं पश्यन्तु -

**संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्।**
**देवा भागं यथापूर्वे सं जनाना उपासते॥**[1]

---

1. ऋग्वेदे 10/125/2

सर्वेषां मनसि समानभावो भवेत्, परस्परम् ऐक्यम् भवेदिति धिया विहिता इयं प्रार्थना भारतीयसंस्कृतेः वैशिष्ट्यं द्योतयति। अतएवोच्यते --

**सत्याहिंसागुणैः श्रेष्ठा विश्वबन्धुत्वशिक्षिका ।**
**विश्वशान्तिसुखाधात्री भारतीया हि संस्कृतिः ॥**

सत्याहिंसादयो गुणाः भारतीयसंस्कृतेः मूले प्रतिष्ठिताः सन्ति। वस्तुतः वैदिककालात् यच्चिन्तनं प्रवृत्तं तत्सर्वम् आध्यात्मिकमेव विद्यते। श्रीमतोऽरविन्दमहर्षेरयमुद्घोषः यत्- 'आध्यात्मिकता एव भारतीयमानसस्य मूलं विद्यते। भारतीयमानसे भौतिकविज्ञानस्यापि बोधः विद्यते किन्तु भौतिकतायाः सार्थक्यम् आध्यात्मिकतां विना न सम्भवति।' आध्यात्मिकतायाः चिन्तनं वेदेभ्यः एव प्रसृतं दृश्यते। एतत्प्रवर्तकं निखिलं वाङ्मयं संस्कृतमयमेव विद्यते। अतः संस्कृतेन सह भारतीयसंस्कृतेः सम्बन्धः अतीव प्रगाढो वर्तते। स च सम्बन्धः श्रीमता अरविन्दमहर्षिणा साक्षादनुभूतः अत एव तेन संस्कृतस्याध्ययने महान् श्रमो विहितः। संस्कृतस्य अध्ययनं सम्पाद्य वेदानां विशिष्टमध्ययनं, रामायणमहाभारतप्रभृतीनाम् अनुशीलनं, कालिदासादीनां महाकाव्यानां सुनिपुणं परिशीलनं च कृतम्।

वस्तुतः बड़ौदाशासकेन सत्कृतः श्रीमान् अरविन्दः यदा तत्र शासकीयमहाविद्यालये आङ्ग्लभाषायाः प्राध्यापकः आसीत् तदैव तेन स्वाध्यायविधिना संस्कृतभाषायाः गहनतरमध्ययनं प्रारब्धम्। भाषायाः सौन्दर्यातिशयेन तन्निहिततत्त्वगौरवेण च समाकृष्टः स वेदादीनां गभीरमध्ययनं प्रारब्धम्। सारल्येन संस्कृतशिक्षणस्य कोऽपि ग्रन्थस्तेन प्रणीतः यः पश्चात् मातुः सकाशाद् लुप्तः। संस्कृतसाहित्यस्य स अतीव प्रशंसकः आसीत्। साहित्यस्य समग्रं वैशिष्ट्यं स संस्कृते पश्यति। तेन प्रोक्तं यत् -

The greatness of a literature lies first in the greatness and worth of its substance, the value of its thought and the beauty of its forms, but also in the degree to which, satisfying the highest conditions of the art of speech, it avails to bring out and raise the soul and life or the living and the ideal mind of a people, an age, a culture, through the genius of some of its greatest or most sensitive representative spirits.[2]

अन्ते अस्मिन्नेव क्रमे संस्कृतभाषायाः वैशिष्ट्यं प्रतिपादयता महर्षिणा प्रोक्तं यत् -

The ancient and classical creations of the Sanskrit tongue both in quality and in body and abundance of excellence, in their potent originality and force and beauty, in their substance and art and structure, in grandeur and justice and charm of speech and in the height and width of the reach of their spirit, stand very evidently in the front rank among the world's greatest literatures. The language itself, as has been universally recognised by those competent to form a judgement, is one of the most magnificent, the most perfect and

2. Sri Aurobindo : The Foundations of Indian cultural, SABCL, Volu. 14, p 255

wonderfully sufficient literary instruments developed by the human mind, at once majestic and sweet and flexible, strong and clearly-formed and full and vibrant and subtle, and its quality and character would be of itself a sufficient evidence of the character and quality of the race whose mind it expressed and culture of which it was the reflecting medium.[3]

वेदेषु बहुत्र पृथिव्याः मातृत्वं वर्णितमस्ति–

माता भूमिः पुत्रोऽहं पृथिव्याः[4]
तन्नो वातो मयोभुवातुभेषजं
तन्माता पृथिवी तत् पिता द्यौः।[5]

चिरस्थायिनि साहित्ये न केवलम् उदात्तभावानां श्रेष्ठता भवति अपितु प्रस्तुतीकरणं, पदशय्या, आनन्दानुभवः कल्पनाशीलता लोकप्रकृतिः तात्कालिकसंस्कृतिश्च कविव्यापारमहिम्ना शोभन्ते।

समुन्नतं निर्दुष्टं सर्वथा परिपूर्णं साहित्यसाधनं मानवमस्तिष्कनिर्मितं यद्यस्ति तत्संस्कृतमेव इति समीक्षणविचक्षणानां महर्षीणामभिमतम्। अनेन खलु साधनेन यत् सिद्धमस्ति या च समुपवर्णिता भवति सा भारतीया संस्कृतिः एव। तदेव भारतीयत्वम्। अनयोर्मध्ये परस्पराश्रयत्वं परस्परपोष्यपोषकभावत्वं वा भवेद् किन्तु अतीवप्रगाढः कश्चन विलक्षणः सम्बन्धः समनुभूयते। अनुवादमाध्यमेनापि बहवः भारतीयसंस्कृतेः परिज्ञानार्थं परिश्रमन्ति किन्तु तेषां स प्रयासः संस्कृतिपरिचायकमात्रमेव भवति।

वस्तुतः अरविन्दमहर्षिणा यच्चिन्तितं यच्च लिखितं भाषितं वा तत्सर्वं वेदमूलकम्। वेदमनादृत्य न किमपि चिन्तितम् तेन। तस्य सर्वेऽपि भावाः वेदाम्भोधिमन्थनस्यैव फलमस्ति। स्वमातृभूमेः दासतानिवारणार्थं तेनः यः प्रयासः कृतः, या च योगसाधना कृता, यच्च प्रकाशनं कृतं तत्सर्वं वेदानुशीलनस्यैव परिणामः। तेन स्वयमेव प्रोक्तं यत्–

The Vedas and the Upanishads are not only the sufficient fountain-head of Indian philosophy and religion, but of all Indian art, poetry and literature.[6]

अलीपुरकारागारे निक्षिप्तः स सर्वभूतमयस्य भगवतः साक्षात्कारं करोति। वस्तुतः साक्षात्कारोऽयं ईशोपनिषदः चिन्तनमननादिकं द्योतयति यतोहि तत्र प्रथमे मन्त्रे एव विद्यते यत्– **ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्। तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद् धनम्॥**[7] कारागारान्मुक्तः सन् विविधं देशमुक्तिकार्यं सम्पाद्य पाण्डिचेरीनगरं प्राप्य तत्र गभीरे तपसि निलीनो जनकल्याणकामनया आध्यात्मिकोपदेशसरणिं प्राप्तः।

---

3. Ibid. PP 255-256
4. अथ. 12/1/12
5. ऋग्वेदे 1/89/4
6. Ibid., PP. 259
7. ईशोपनिषद् 1

'भवानीभारती' इति उपजातिच्छन्दोबद्धं संस्कृतकाव्यं श्रीमता अरविन्दमहर्षिणा विरचितम् एकमात्रं संस्कृतसाहित्यमस्ति। एतत्काव्यं सर्वप्रथमं श्रीअरविन्दाश्रमस्य Archives and Research इति पत्रिकाया: 1985 तमे वर्षे दिसम्बरमासे आंग्लानुवादेन सह प्रकाशितमभूत्। अस्य रचना 1904 तः 1908 मध्ये जाता इति तु पत्रिकावृत्तान्तेनावगम्यते अत्र एकोनशतं पद्यानि सन्ति।

**मातास्मि भो पुत्रक भारतानां सनातनानां त्रिदशप्रियाणाम्।**
**शक्तो न यान् पुत्र विधिविपक्षः कालोऽपि नो नाशयितुं यमो वा ॥**

**ते ब्रह्मचर्येण विशुद्धवीर्या ज्ञानेन ते भीमतपोभिरार्याः ।**
**सहस्त्रसूर्या इव भासुरास्ते समृद्धिमत्यां शुशुभुर्धरित्र्याम् ॥[8]**

'भवानीभारती' इति काव्यस्य नामकरणमेव काव्यस्य वैशिष्ट्यं द्योतयति। प्रश्नः उदेति 'भवानी' इत्यस्य किं तात्पर्यं कथं तत्र 'माता' इत्यस्य प्रयोगं न कृत्वा अस्य पदस्य प्रयोगः ? इति जिज्ञासायाम् उच्यते- (भवानीभारतीति पुस्तकस्य भूमिकाभागतः श्रीमतोऽरविन्दस्य भावना प्रस्तूयते)

'स कथयति यत्- 'यदा यूयं प्रश्नं कुरुथ का इयं माता भवानी इति तदा सा स्वयम् उत्तरं ददाति अहं सा अनन्तशक्तिः या विश्वे युष्माकम् अन्तरे च विद्यमान-शाश्वतपुरुषात् प्रवहति। अहं विश्वस्य लोकान्तराणां च जननी ये च अस्याः आर्यभूमेः सन्तानाः, तस्याः मृत्तिकया निर्मिताः, तस्याः आतयेन वायुना च पोषिताः तेषामर्थे अहं भवानी भारती, भारतमाता'' इति ।

यत् श्रीअरविन्दस्य विचारे भारतभूमिः न केवलं मृत्तिकाखण्डम् अपि तु महाशक्तिः अस्माकं सर्वेषां जीवनदात्री परिपालयित्री च ।

भूमेः मातृरूपेण निरूपणं भारतीयसंस्कृतेः महत्त्वपूर्णं वैशिष्ट्यमस्ति। अयं भावः वेदेभ्यः एव प्रवर्तते। तत्र विविधेषु मन्त्रेषु पृथिव्याः मातृरूपेण वर्णनं प्राप्यते। माता भूमिः पुत्रोहं पृथिव्याः। तन्नो वातोमयोभु वातु भेषजं तन्माता पृथिवी तत्पिता द्यौः। पृथ्वीमाता अस्ति, जननी अस्ति सर्वेषां जीवानाम्। तस्याः सामर्थ्यं न केवलं जनने अपितु संरक्षणे संवर्धनेप्यास्ते।

भवस्य पत्नी भवानी अपि जगतः माता अस्ति पर्वतस्य पुंत्री पार्वती शक्तिस्वरूपा अस्ति। तस्याः जगतः मातृरूपेण वर्णनं कालिदासेनापि कृतमस्ति-

**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौः॥[9]**

---

8. भ.भा. 12,13
9. रघुवंशमहाकाव्यम् 1.1

तुलसीदासोऽपि रामचरितमानसे लिखति-

**भवानीशङ्करौ वन्दे श्रद्धविश्वासरूपिणौ।**
**याभ्यां विना न पश्यन्ति सिद्धाः स्वान्तस्थमीश्वरम्।।** इति

प्रातःकालीनप्रार्थनायामपि एक श्लोकः पठ्यते-

**समुद्रवसने देवि पर्वतस्तनमण्डिते।**
**विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे।।**

अर्थात् वसुन्धरा साक्षाल्लक्ष्मीस्वरूपा जगतः माता इति व्यवहारः सर्वत्र भारते प्रसिद्ध एव।

जननी जन्मभूमिश्च स्वर्णादपि गरीयसी, इति व्याहरता भगवतो रामस्य मुखाद् मुनिना वाल्मीकिना पृथिव्याः मातुश्च समानाधिकरण्यमेव प्रतिष्ठापितम्।

इयमेव परम्परा प्रवर्तते श्रीमतोऽरविन्दस्य अस्मिन् काव्ये। देवी भारती अर्थात् भारतमाता अस्माकं स्त्रष्ट्री कदाचित् दुर्गा, कदाचित् काली कदाचित् राधा लक्ष्मीः वा अस्ति। स्वयमेव अरविन्दमहर्षिः ब्रूते-

यदा पृथिव्याः अन्तहीनावर्तनेषु शाश्वतपुरुषस्य चक्रं स्वमार्गेषु प्रबलं घूर्णते तदा शाश्वतपुरुषात् प्रवहन्ती, चक्रं च गतिमत् कुर्वती अनन्तशक्तिः विविधाकारैः अनन्तरूपैश्च मानवस्य अन्तर्दृष्टौ उन्मिषति। प्रत्येकम् आकारः युगमेकं सृजति प्रवर्तयति च । सा शक्तिः कदाचित् प्रेमरूपेण आविर्भवति कदाचित् ज्ञानरूपेण, कदाचित् त्यागरूपेण, कदाचित दयारूपेण। सेयम् अनन्तशक्तिरेव भवानी। सा हि दुर्गा, सा काली, सा प्रेममयी राधा, सा लक्ष्मीः सा अस्माकं जननी सर्वेषां च स्त्रष्ट्री।

श्रीअरविन्दस्य विचारे मातृभूमिः भूखण्डमात्रं नास्ति। सा महती शक्तिः अस्ति। स कथयति यत् 'न हि सा कश्चित् भूखण्डविशेषः, न वा भाषायाः अलङ्कारः न वा मनसः कल्पना। सा खलु महाशक्तिः। यथा भवानी महिषमर्दिनी बलपुञ्जरूपेण संहतानाम् ऐक्यग्रथितानां कोटिशः देवानां शक्तेः आविर्भूता तथैव राष्ट्रस्य अङ्गभूतानां कोटिशः प्रजानां समवायेन सा समुत्पन्ना। यां शक्तिं वयं भारतवर्षे भवानीभारतीं वा मन्यामहे सा हि कोटिशः प्रजानां शक्तेः जीवत्समवायः, किन्तु सा निष्क्रियाः, तमसः मोहावर्ते निगडिता, स्वसन्तानानां क्षुद्रस्वार्थरतेन जाड्येन अज्ञानेन च ग्रस्ता। अन्तस्थब्रह्मणः जागरणम् एव तमसः मुक्तेः उपायः।

**कवे विलासिन् शृणु मातृवाक्यं**
**कालीकरालीं भज पुत्र चण्डीम् ।**
**द्रष्टासि वै भारतमातरं तां**
**घ्नतीमरातीन् भृशमाजिमध्ये ।।**[9]

---

9. भ.भा. 30

भारतीभवानीत्यस्य कविना भारतमातुर्महिमानं निर्वर्णयता प्रभावपूर्ण निबद्धं स्तुतिगानम्-

समाधिधीरा हिमभूतदेहा
युगान्यनेकानि हिमाद्रिकूटे ।
ये योगिनो भारतगोप्तृरूपा-
स्ते तुष्टुवस्तां मुदिता महान्तः ॥[10]

मस्ते बलं वर्णयितुं समर्थो
देवि प्रचण्डे करपल्लवेन ।
एकेन हि भ्रामयसे रुणन्सि
विश्वं सतारार्नमनन्तवीर्ये ॥[11]

प्रीतिर्दया धैर्यमदम्यशौर्यं
श्रद्धातितिक्षाविविधाश्च विद्याः ।
अनन्तरूपे त्वमसि प्रसीद
चिरं वसार्ये हृदि भारतानाम् ॥[12]

10. भ.भा. 52
11. भ.भा. 55
12. भ.भा. 98

# श्रीगोस्वामितुलसीदासचरितमहाकाव्यस्य साहित्यिकं परिशीलनम्

डॉ. सुमनकुमारझा

आङ्गिकं भुवनं यस्य वाचिकं सर्ववाङ्मयम्।
आहार्यं चन्द्रतारादि तं नुमः सात्त्विकं शिवम्।।[1]

संस्कृतभाषायाः साहित्यं विश्वसाहित्येऽन्यतममस्तीति निश्चप्रचम्। यथा संस्कृतभाषा प्राचीनाऽपि चिरनवीना एव राराज्यते, तथैव संस्कृतसाहित्यमपि सर्वदा नवीनमेव प्रतिभाति। वैदिकालादारभ्य इदानीं यावत् निर्वाधगत्या प्रवहति संस्कृतसाहित्यस्याविरलधारा। संस्कृतसाहित्यं सर्वदा किमपि नूतनं वर्ण्यवस्तूरीकृत्य तदाधारेण तात्कालिकं समाजस्वरूपं राष्ट्रस्वरूपं मानवजीवनञ्च विधि-निषेधवाक्यमाध्यमेन प्रस्तौति। जीवनस्य विषमपरिस्थितीनां मध्ये संस्कृतसाहित्यमलौकिकानन्दमन्वेषयति। संस्कृतकाव्यानि भारतीयसंस्कृतेः गाथां श्रावयन्ति, नाट्यानि च कमनीयक्रीडां प्रदर्शयन्ति।

आदिकाव्यरामायणादारभ्य अर्वाचीनसंस्कृतसाहित्यपर्यन्तं संस्कृतसाहित्यस्यैका महनीया, सुदीर्घा, विशिष्टा च परम्परा दरीदृश्यते। तत्र एकत अगाधमतिगम्भीरं समग्रज्ञान-विज्ञानसमन्वितं प्राचीनसाहित्यमस्ति त्वपरतः युगानुकूलमर्वाचीनसाहित्यम्।

साम्प्रतिके काले विरच्यमानाः काव्यकृतय आधुनिकसंस्कृतसाहित्यनाम्ना व्यपदिश्यन्ते। भारतवर्षस्य विविधेषु प्रान्तेषु परःशतं सुकवयः प्रतिदिनं नवनवानि काव्यानि संस्कृतभाषायां रचयन्ति, तेन वर्धयति वाग्देव्याः कोशं, वर्धयति च संस्कृतवाङ्मयम्। संस्कृतसाहित्येऽनेके महाकवयोऽभूवन्, तेषु केचन एव महाकवयो महाकाव्यानि विरच्य जगत्यस्मिन् यशोऽर्जितवन्तः। यथा चोच्यते भर्तृहरिणा-

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।
नास्ति येषां यशःकाये जरामरणजं भयम्।।[2]

प्राचीनसाहित्ये यथा महर्षिवाल्मीकि-व्यास-कालिदास-अश्वघोष-भारवि-माघ-भट्टि-कुमारदास-श्रीहर्षादयो महाकवयोऽभूवन्। तथैव अर्वाचीनसंस्कृतसाहित्ये श्रीधरभाष्करवर्णेकर-उमापतिद्विवेदी-पं.काशीनाथद्विवेदी-प्रभुदत्तशास्त्री- पं.ब्रह्मानन्दशुक्ल- परमेश्वरदत्तत्रिपाठी- डॉ. रेवाप्रसादद्विवेदी-

---

1 सङ्गीतरत्नाकरग्रन्थस्य मङ्गलपद्यम् ।

2 भर्तृहरिविरचितम्- नीतिशतकाद्।

अखिलानन्दशर्मा-आचार्यमेधाव्रत- केशवक्षत्रे- त्र्यम्बकशर्माभण्डारकर- श्रीसत्यव्रतशास्त्री-महाकविकृष्णानन्द- श्रीराजेन्द्रमिश्रादयो महाकवयः सन्ति।

संस्कृतवाङ्मये महाकाव्यनिर्मितेरेका महनीया परम्पराऽस्ति। तत्र प्राचीनसाहित्ये-वाल्मीकिरामायण-महाभारत-बुद्धचरित-रघुवंश- कुमारसम्भव-किरातार्जुनीय- शिशुपालवध-जानकीहरण-नैषधीयचरितादयो महाकाव्यानि सुप्रसिद्धानि सन्ति। आधुनिकसंस्कृतसाहित्ये नैकानि महाकाव्यानि विरचितानि सन्ति, यथा-शिवराज्योदयम्, वैनायकमहाकाव्यम्, श्रीमत्प्रतापराणायणमहाकाव्यम्, कंसवध महाकाव्यम्, लेनिनामृतमहाकाव्यम्, श्रीकृष्णचरितामृतम्, स्वराज्यविजयम्, भारतपारिजातम्, श्रीगान्धि गौरवम्, जनविजयम्, गांधीविजयम्, सत्याग्रहगीता, दयानन्दलहरी, दयानन्ददिग्विजयम्, श्रीरामदासचरितम्, तुकारामचरितम्, रुक्मिणीहरणम्, चीरहरणम्, श्रीज्ञानेश्वरचरितम्, बोधिसत्त्वचरितमहाकाव्यम्, रामकीर्तिमहाकाव्यम्, जानकीजीवनम्, सीताचरितम्, महर्षिदयानन्दचरितम्, विवेकानन्दचरितम्, इन्दिराचरितम्, नेहरूचरितम्, गान्धिचरितम्, उत्तरनैषधीयचरितम्, सहृदयानन्दमहाकाव्यम्, नलविलासमहाकाव्यम्, ईश्वरविलासमहाकाव्यम्, भीष्मचरितम्, श्रीगोस्वामितुलसीदासचरितमहाकाव्यञ्च।

आधुनिकसंस्कृतसाहित्यरचयितृषु पं.हरिप्रसादद्विवेदिमहोदयस्य स्थानमतिविशिष्टमस्ति। तेन विरचितं श्रीगोस्वामितुलसीदासचरितमहाकाव्यम् आधुनिकसंस्कृतमहाकाव्येष्वन्यतममस्ति। अर्वाचीनसंस्कृतसाहित्य-परिमण्डले महाकाव्यस्यास्याभिनवत्वं सर्वथा परिलक्ष्यते। आधुनिकेषु रचनाकारेषु पण्डितक्षमारावः, पं. ब्रह्मानन्दशुक्लः, डॉ. सत्यव्रतशास्त्री, डॉ. श्रीकृष्णसेमवालादय एते सुकवयः राजनेतृन् लोकनेतृन् च केन्द्रे संस्थाप्य संस्कृतभाषया प्रबन्धकाव्यानि विरचितवन्तः । पं. अखिलानन्देन महर्षिदयानन्द-सरस्वतीमभिलक्ष्य महाकाव्यस्य रचना कृता। परञ्च कमपि कविमवलम्ब्य संस्कृतसाहित्ये महाकाव्यं नासीत् । महदामोदस्य विषयो यत् पं.हरिप्रसादद्विवेदमहोदयेन **'श्रीगोस्वामितुलसीदासचरित'** इति महाकाव्यस्य रचनां विधाय अस्याभावस्य पूर्तिः कृता । स्वकीयहिन्दी-आंग्लभाषानुवादसहितं ग्रन्थस्यास्य प्रथमसंस्करणस्य प्रकाशनं पं0 रामजीवनद्विवेदिमहोदयस्य संपादकत्वे 2010 तमे वर्षे जातम्। ग्रन्थस्यास्य प्रकाशकोऽस्ति- रामजीवनद्विवेद्वी, कृष्णासदनम्, 70- विवेकविहारः, ज्वालापुरम्, हरिद्वारम्।

संस्कृतकाव्यानि पुराणं, रामायणं, महाभारतञ्च बीजभावेनाश्रयन्ति, यद्यपि वेदेषु वर्णनपराणां मन्त्राणामुपलब्धिरिति तदपि परोक्षभावेन काव्यबीजत्वं भजते, परन्तु रामायणादीनि तु प्रत्यक्षभावेनैव काव्यस्य बीजानीति वक्तुं शक्यन्ते। लौकिकसंस्कृतसाहित्ये रामायणमेवादिकाव्यं, महर्षिवाल्मीकिश्चादिकविरित्यस्ति प्रसिद्धिः।

प्राचेतसं रामायणमुपजीव्य, अन्यच्च रामचरितपोषकं पुराणादिसाहित्यग्रन्थजातं सतां स्वीयञ्चानुभवमधिकृत्य **रामचरितमानसं** विरचयामास सत्सु शिरोमणिगोस्वामितुलसीदासः।

उक्तञ्च तैरेव- **नानापुराणनिगमागमसम्मतं यद् रामायणे निगदितं क्वचिदन्यतोऽपि।**
**स्वान्तःसुखाय तुलसी रघुनाथगाथा भाषानिबद्धमतिमञ्जुलमातनोति॥**[3]

साम्प्रतिके काले रामचरितमानसकाव्यं साहित्यजगति लोकेषु च अतीव प्रख्यातं लोकप्रियञ्चास्ति।

---

3 रामचरितमानसस्य मङ्गलपद्यम्।

भारतीयसमाजे महाकविगोस्वामितुलसीदासविरचितस्य रामचरितमानसकाव्यस्य यादृशी प्रतिष्ठा विद्यते, भारतीयानामुपरि यादृशः प्रभावोऽस्ति तत्तु सर्वथा सुविदितमेव विदुषाम्। वर्षेभ्यो ग्रन्थोऽयं धार्मिकग्रन्थइव समाद्रियतेऽस्मत्समाजे। गृहे-गृहे, ग्रामे-ग्रामे च ग्रन्थस्यास्य पाठो महत्या श्रद्धया, धार्मिकरीत्या च क्रियते स्म, क्रियते चाद्यापि । अनेन ग्रन्थस्यास्य वैशिष्ट्यं सुतरामेव सिद्धम्। एतादृशस्य महनीयकाव्यस्य यः प्रणेता, तस्मिन्विषये सर्वेषां जिज्ञासा स्वाभाविकी एव। अतो नूतनचिन्तनानुगुणं पं.हरिप्रसादद्विवेदिनः श्रीगोस्वामितुलसीदासचरितमहाकाव्यं विरच्यास्माकं सर्वेषां महाकविगोस्वामितुल- सीदाससम्बद्ध - जिज्ञासानां परिशमनाय समुद्योगं कृतवन्तः। महाकाव्यमिदं गोस्वामिनः तुलसीदासस्य सम्पूर्णं जीवनचरितमुपवर्णयति । अनेन महाकाव्येन सम्प्रति प्रवर्तमानायाः महाकाव्यनिर्मलरसप्लाविताया धाराया अप्युद्घाटनं भवति।

महाकाव्यमिदमेकविंशशतके प्रवर्तितम्। महाकाव्येस्मिन् एकादशसर्गाः सन्ति। तेष्वेकादशसर्गेषु वर्णितानां विषयवस्तूनां विवरणमित्थमस्ति--

प्रथमसर्गे गोस्वामितुलसीदासजन्मभूमिसूकरक्षेत्रवर्णनम्। द्वितीयसर्गे गोस्वामितुलसीदासस्य पूर्वजवंशवर्णनम्। तृतीयसर्गे तुलसीदासनन्ददासचन्द्रहासानां जन्मवर्णनम्। चतुर्थसर्गे पितृविहीनस्य गोस्वामितुलसीदासस्य पितामह्या पोषणम्, गुरोर्नरहरेः गृहे विद्याध्ययनम्, रत्नावल्या साकं तुलसीदासस्य विवाहवर्णनञ्च। पञ्चमसर्गे षड्ऋतुवर्णनम्। षष्ठसर्गे तुलसीदासादीनां तीर्थयात्रावर्णनम्। सप्तमसर्गे नन्ददासस्य व्रजे निवसनम्, सूकरक्षेत्रे पितामह्याः स्वर्गारोहणञ्च । अष्टमसर्गे तुलसीदासरत्नावल्योः पुत्रतारापतिजन्म मरणञ्च, रत्नावल्या भ्रातृगृहगमनम्, तुलसीदासस्य गृहत्यागो विरक्तिश्च । नवमसर्गे विरक्तस्य तुलसीदासस्य भ्रमणवर्णनम्, काश्यां रामचरितमानसप्रकाशनञ्च। दशमसर्गे चित्रकूटे निवासः राजाख्यस्य यतेरागमनम् । एकादशे च सर्गे बहुचर्चितचमत्कारवर्णनम्, असाध्यव्रणव्याधिग्रस्तस्य तुलसीदासस्य साकेतधामप्रयाणञ्च।

द्विवेदिमहोदयेन महाकविगोस्वामितुलसीसम्बद्धसम्पूर्णसामग्रीणां सङ्कलनात्परमेव महाकाव्यस्यास्य रचना विहिता। यथा-

**गोस्वामितुलसीदासचरितं सत्प्रमाणितम्।**
**न्यबध्नाद् देवभारत्यामयमन्वेषपूर्वकम्।।** [4]

संस्कृतमहाकाव्यस्य यल्लक्षणं प्राचीनाचार्यैः भामहदण्डीविश्वनाथप्रभृतिभिः प्रतिपादितमस्ति तल्लक्षणं महाकाव्येऽस्मिन् सर्वथा न घटते।[5] परमाधुनिककाव्यशास्त्रीयाचार्यैः प्रतिपादितं महाकाव्यलक्षणं महाकाव्येऽस्मिन् सर्वथा घटते।

---

4 श्रीगोस्वामितुलसीदासचरितमहाकाव्यस्यभूमिकाभागतः।

5 (क)- काव्यालङ्कारः-1/19,20,21।
(ख)- काव्यादर्शः-1/14-19।
(ग)- साहित्यदर्पणः-6/ 315-324।

उदाहरणार्थं मिश्रोऽभिराजराजेन्द्रप्रणीते 'अभिराजयशोभूषणमिति' आधुनिककाव्यशास्त्रीयग्रन्थे प्रतिपादितं महाकाव्यलक्षणमत्रोपस्थाप्यते--

सर्गबन्धो महाकाव्यं लोकवन्द्यजनाश्रयम्।
ख्यापयद्विश्वबन्धुत्वं स्थापयद्विश्वमङ्गलम्॥

नायकस्तत्र देवः स्यात्प्रजाबन्धुरथो नृपः।
चारुचर्योऽथवा कोऽपि सज्जनश्चरितोज्जवलः॥

प्रातस्सन्ध्यानिशीथेन्दुभास्करोदयतारकाः।
वनोद्यानदीसिन्धुप्रपाताद्रिबलाहकाः॥

ग्रामाश्रमपुराऽऽरामदुर्गसैन्यरणोद्यमाः।
पुत्रजन्मादिवृत्तान्ताः पामरावाससङ्कथा॥

इतिवृत्तानुरोधात्तु वर्णनीया न चाऽन्यथा।
प्रसह्य वर्णने तेषां न च तृप्तिर्न वा यशः॥

यच्छिवं यच्च सत्यं स्यादथवा लोकमङ्गलम्।
वर्णनीयं प्रकल्प्यापि कथांशीकृत्य सादरम्॥

सर्गा अष्टाधिकाः सन्तु कथाविस्तृतिसम्मताः।
अष्टत्रिगुणतां यावत्सर्गसंख्या प्रथीयसी॥

नोद्वेगः कविना कार्यः पाठकानां रसात्मनाम्।
सर्गसंख्यादिविस्तारैर्वर्णनैर्वाऽनपेक्षितैः॥

लोकवृत्तं न हातव्यं मूलवृत्तोपकारकम्।
लोकचित्रणगर्भं हि महाकाव्यं महीयते॥

त्रयाणां पुरुषार्थानां कश्चिदेको भवेद्ध्रुवम्।
महाकाव्यफलं रम्यं धर्मकामार्थसम्मतम्॥

शृङ्गारवीरशान्तानां कश्चिदन्यतमो रसः।
सयत्नमङ्गीकर्तव्यः कविना प्रतिभावता॥

छन्दोऽलङ्कारसन्दर्भा भूरिवैविध्यमण्डिताः।
महाकाव्ये प्रयोक्तव्या भावुकानां प्रतुष्टये॥

लोकोत्तरगुणादर्शः पुरुषो नायको भवेत्।
महीयसी पुरन्ध्री वा नाऽत्र कार्या विचारणा॥

**कथावैशिष्ट्यमालक्ष्य समज्ञां नायकस्य वा।**
**करणीयं महाकाव्यस्याभिधानं यशस्करम्॥**

**प्रतिष्ठापयितुं नूत्नं महाकाव्ये स्वयं कविः।**
**आचार्यप्रतिभो नूनं यदि वा भवति क्षमः॥** इति[6]

महाकाव्यस्यास्य नायको गोस्वामितुलसीदासो महाकाव्येषु प्रचलितपरम्परानुसारेण धीरोदात्तनायकं अस्ति। वैदिकजीवनमूल्यानां परम्पराणाञ्च पुनस्स्थापनं महाकाव्यस्यास्य प्रतिपाद्यविषयोऽस्ति। तत्र कविना स्वकाव्यनायकस्य परिचय एभिः शब्दैः प्रदत्तः-

**तस्मिन्नेव वरे क्षेत्रे गोस्वामिपदविभूषितः।**
**तुलसीदासनामाऽभूदुत्पन्नः कविपुङ्गवः॥**

**स चक्रे रामचरितमानसं मानसामृतम्।**
**कलिकल्मषविध्वंसि रामभक्तिरसायनम्॥**[7]

अत्र तस्मिन्नेव वरे क्षेत्रे इत्युक्ते सूकरक्षेत्रे। महाकविद्विवेदिमहोदयः स्वकाव्यस्य नायकमित्थं वर्णयति-

**स प्रोन्नतस्कन्धविशालवक्षा, गौरः सुपीनः सुविशालनेत्रः।**
**भक्ताऽग्रणी भक्तजनानुरागी, शान्तो दयालुर्विदुषां वरिष्ठः॥**

**वेदागमेतिह्यपुराणतन्त्रसाहित्यसंगीतकलासु दक्षः।**
**ज्योतिर्नयाचारनयप्रवीणः श्रीरामपादाम्बुजचञ्चरीकः॥**

**धैर्यान्वितः सत्यपरः सुवाग्मी, गाम्भीर्यसिन्धुः पृथिवी क्षमायाम्।**
**ब्रह्मण्यवर्यश्च विवेकहंसः, सर्वप्रियो सर्वहितो बभूव॥**[8]

वैदिकवर्णव्यवस्थायाः स्थापने तत्प्रयत्नः मनोरिव, रामकथापरम्परायाः पुनरुद्धाराय मानवीयमूल्यानां संरक्षणे च महर्षिवाल्मीकिरिव, धर्मसंस्थापने काव्यमूल्यानाञ्च परिरक्षणे वेदव्यासमुनिरिवासीत्महाकवितुलसीदास[9] इति महाकविद्विवेदिमहोदयस्याभिमतम् । यथा-

**भूयोव्यवस्थापयितुं मनुर्वा, इहाविरासीत् तुलसीशरीरी॥**
**वाल्मीकिरेवाप्तपुनः प्रसूतिर्मन्ये तुलस्याख्यकविर्बभूव॥**
**भूयः श्रुतेर्धर्मविवेचनाय, जज्ञे धरित्र्यां तुलसीस्वरुपः॥**

---

6 अभिराजयशोभूषणम्-निर्मितितत्त्वोन्मेषः- का0सं0/66-80, पृ0/218
7 गोस्वामितुलसीदासचरितम्- 1/42,43
8 तत्रैव-1/44,45,46
9 तत्रैव-1/47,48,49

एतस्माद् गुणत्रयकारणाद् तुलसीदासः समकालिनकविषु शीर्षस्थकविरिति समालोचकानां मतम्। काव्यस्यास्य मङ्गलपद्येऽपि कविः स्वकाव्यनायकस्य तुलसीदासस्य वैशिष्ट्यं वर्णयति। यथा–

**श्रीमान् सतां धर्मवतां महात्मनां, यो रक्षको धर्मपथस्य भूतले।**
**आस्थापकश्चागमवेदसंस्कृतेः, शन्नः स कुर्यात् पुरुषोत्तमः सदा॥**[10]

अत्र पुरुषोत्तमः शब्दो श्रीरामतुलसीदासयोरुभयोर्लक्षकः, तेनाऽयं मङ्गलाचरणश्लोक उभयसम्बन्धी। वाल्मीकेः नायको श्रीरामो वेदागममूलसंस्कृतेः परिरक्षणायावतरितः, एवञ्च तुलसीदासेनापि स्वकाले आक्रान्तभारतीयसंस्कृतेः संवर्द्धनाय संरक्षणाय च श्रीरामचरित्रस्य पुनरवतारणा कृता। तत्र चोक्तं कविना स्वकाव्यनायकस्य विषये–

**अमितगुणनिधानं लब्धमानोऽप्यमानो, विततविमलकीर्तिर्ज्ञानविज्ञानमूर्तिः।**
**गुरुजनपरिसेवी लोकमान्यो वदान्यो, विवुधकविजनानामग्रगण्यो वरेण्यः॥**[11]

महाकाव्यस्यास्य नायिकाऽस्ति रत्नावली। काव्यशास्त्रानुसारं सा प्रोषितभर्तृका नायिकाऽस्ति। यथा प्रोषितभर्तृकानायिकाया लक्षणमुच्यते विश्वनाथेन–

**नानाकार्यवशाद्यस्या दूरदेशं गतः पतिः।**
**सा मनोभवदुःखार्ता भवेत्प्रोषितभर्तृका॥** [12]

यथा– **भवता त्यजताऽहमद्य सा, विहिता प्रोषितभर्तृका व्रता।** [13] तत्र रत्नावल्याण चित्रणमित्थं क्रियते कविना–

**कुलाङ्गनानां धुरि माननीया, सुलक्षणा सद्विदुषी सुशीला।**
**निसर्गतो लब्धकवित्वशक्ती, रत्नावली तस्य सुता बभूव॥**

**वदननिन्दितशारदचन्द्रमा, मृदुलगौरसुपुष्टवसुमती।**
**सदनकृत्यविधौ कुशला धृतौ, वसुमती सुमती रतिरूपयुक्॥** [14]

**रसयोजना–** पं0हरिप्रसादद्विवेदिना प्रस्तुतमहाकाव्ये छन्दो–अलङ्कार–रसयोजना–रीतियोजना–गुणसन्निवेश– शब्दपाक–भाषासौष्ठवादीनां सफलनिर्वाहः कृतः। द्विवेदिमहोदयः काव्यरीतेः पूर्णपण्डितोऽस्ति। नेतृ–वस्तु–रस–भाषा–भाव–उद्देश्य–प्रकृतिवर्णनदृष्ट्या च काव्यमिदमाधुनिकसंस्कृतमहाकाव्येषु शीर्षस्थानं धारयति। रससन्दर्भे कदाचित् वैमत्यं जायते – यत्महाकाव्यस्यास्याङ्गीरसो करुणोऽस्ति उत वा शान्तः। शैशवे एव मातृपित्रोः स्वर्गवासः, रत्नावल्या अनन्तवियोगः, एकमात्रपुत्रस्य तारापतेः मृत्युः, एतेषां

---

10 तत्रैव–1/1

11 तत्रैव–1/50

12 साहित्यदर्पणः– 3/84

13 तत्रैव–8/88

14 तत्रैव–4/62,63

संयोगाद् यो शोकस्थायिभावोत्पद्यते, तेन करुणरसस्य परिपाको परिदृश्यते, किन्तु तुलसीदासस्य विषादः यस्मिन्निर्वेदे पर्यवस्येते, तेन शान्तरसस्याङ्गीत्वं निश्चीयते। समाजकल्याणस्य वृत्तिः, वैराग्यज्ञानं, परमात्मनि दृढनिष्ठा चैतानि महाकाव्यस्यास्य मूलतत्त्वानि सन्ति। तृष्णाक्षय- रागक्षय-आनन्द-शमाश्चास्य मूलभावाः सन्ति। काशी- अयोध्या-चित्रकूटानां वर्णने, षड्ऋतुवर्णने, राम-सीता-शिव-हनुमत्-कालभैरवानाञ्च वन्दनायां तत्त्वज्ञानयुक्तः शमोऽभिव्यज्यते । अतोऽत्र शान्त एवाङ्गीरसः। अङ्गरसत्वेनात्र शृङ्गार-करुण-वात्सल्यरसानामभिनिवेशो दृश्यते। करुणरसस्योदाहरणं यथा-

**भगिनी सरस्वती च भ्रातुर्मरणे निराश्रयाऽत्यन्तम्।**
**हृदये व्यथिताऽरोत्सीद् हाहेत्युच्चैर्यथा कुकरी।।**[15]

परञ्च समाजकल्याणस्य वृत्तिः, वैराग्यं, ज्ञानं, ईशविषयकदृढेच्छा च महाकाव्यस्यास्य मूलतत्त्वानि वर्तन्ते। तृष्णा-राग-शम-क्षयऽऽनन्दादय अस्य मूलविषयाः वर्तन्ते। काशी-अयोध्यादिषु प्रसङ्गेषु तत्त्वज्ञानयुक्तशमभावस्य व्यञ्जना कृताऽस्ति। अत अङ्गीसरत्वेन शान्तः तथा च अङ्गरूपेण वात्सल्य-शृङ्गार-करुणादयश्च विद्यन्ते।

शान्तरसो यथा-

**परोपकारैकधनस्तपोरतः, परेशरामाऽङ्घ्रिपरानुरागवान्।**
**सदा सदाचारपरायणाऽग्रणीः, क्षमादयाऽब्धिर्विगतैषणात्रयः।।**

**अनुष्ठिताऽऽजीवनपुण्यकर्मभिर्विशुद्धचित्तो विमलात्मभावनः।**
**ऋजुः शमी सर्वजगद्धिते सुखी, न शोच्य एष त्रिदिवं गतो यतिः।।**[16]

**गुणनिरूपणम्-** महाकाव्यस्य भाषायां लक्षणा-व्यञ्जनाभ्यां सह माधुर्यप्रसादौजोगुणानां छटाऽपि दृश्यते, परं तत्र वीररौद्ररसयोरभावत्वादोजोगुणस्याल्प एव प्रयोगः प्राप्यते।

**माधुर्यगुणस्योदाहरणं यथा-**

**नानामहीरुहविकस्वरपुष्पगन्धं, चेतः परप्रमदसञ्जनैकबन्धुम्।**
**आदायमन्दगतिगन्धवहः सुशीतस्तस्यात्मनि व्यतनुताऽमितमोदराशिम्।।**[17]

प्रसादगुणस्योदाहरणं यथा- **लोकाऽभिरामं विपदां विरामं, हरिं चिदानन्दमयं परेशम्।**
**विश्वस्य भर्तारमनन्तवीर्यं, रामं वयं दिव्यतनुं नुमस्त्वाम्।।**[18]

एवमेव सम्पूर्णे काव्ये माधुर्यप्रसादगुणयोर्विलक्षणा छटा परिदृश्यते।

**छन्दोविधानम्-** महाकविहरिप्रसादद्विवेदिना प्रस्तुतकाव्ये नैकानि छन्दांसि प्रयुक्तानि सन्ति।

---

15 तत्रैव-2/26

16 तत्रैव-10/41,42

17 तत्रैव-5/14

18 तत्रैव-6/14

अत्र अनुष्टुप्-वंशस्थ-आर्या-तूणक-तोटक-दोधक-मयूरगति-मृगीयवानी-पृथ्वी-सुन्दरी-इन्द्रवज्रा-उपेन्द्रवज्रा-उपजाति-द्रुतविलम्बित-भुजङ्गप्रयात-पुष्पिताग्रा-भद्रविराट-प्रहर्षिणी-रथोद्धता-पञ्चचामर-वसन्ततिलका-मालिनी-शालिनी-मन्दाक्रान्ता-शिखरिणी-शार्दूलविक्रीडित-स्रग्धरादीनां छन्दसां रमणीयप्रयोगोऽवलोक्यते। वंशस्थस्योदाहरणं यथा-

तस्यास्तटे प्रोन्नतभव्यमन्दिरे, स्वर्गोपमे भास्वति मङ्गलावहे।
शक्त्या समं भूवलयं समुद्धरन्, श्रीमान् वराहो भगवान् विराजते।। [19]

अलङ्कारयोजना- अलङ्कारप्रयोगे महाकवेः वैशिष्ट्यं सर्वथा श्लाघनीयमस्ति। महाकाव्येऽस्मिन् अनुप्रास-यमक-उपमा-रूपक-उत्प्रेक्षा-प्रतिवस्तूपमा-निदर्शना-दृष्टान्त-विभावना-विशेषोक्ति-दीपक-अर्थान्तरन्यास-काव्यलिङ्ग-अप्रस्तुतप्रशंसा-अतिशयोक्ति-व्यतिरेकादयोऽलङ्काराः तत्तत्सन्दर्भेषु चित्रितास्सन्ति। उत्प्रेक्षालङ्कारस्य तु विशेषज्ञाः सन्ति महाकवयः। कतिपयानामलङ्काराणामुदाहरणान्यत्र प्रस्तूयन्ते। यथाऽनुप्रासः-

कान्तकान्तिकमनीयकन्यका। कान्तकान्तिकलिता कलावती।।
आकलय्य मुमुदे कलं वरं। दीनबन्धुदयिता दयावती।। [20]

अपि च - तां सर्वथा स्वहृदयाऽनुगतां सुरूपां, विद्यावतीं कविकलाकलितां कलाङ्गीम्।
स्नेहेन शीलविभवेन च शोभमानां, लब्ध्वाऽऽपतोषमलमात्मनि हौलसेयः।।

गुण्यां वरां निजकुलाऽनुगुणां कुलीनां,
दिव्याम्बराभरणभूषितशोभनाङ्गीम्।
लज्जानतां नववधूमवलोक्य हर्षे,
शेके स्वचेतसि पितामहिका न मातुम्।। [21]

अपि च- सारङ्गकोकिलशुकादिविहङ्गमानां, प्रच्छायवृक्षविटपेषु समुन्मदानाम्।
केल्यञ्चितः कलरवो गृहमेधिधर्मे, प्रोद्धर्षणाय सगृहस्य बभूव तस्य।।[22]

अपि च- विपुलबलनिधीशः कामरूपः कपीशो, दिनकरकरभास्वद्दीप्तिमद्दिव्यदेहः।
भुवनभयदभूतव्याधिहन्ताऽक्षहन्ता, दशमुखपुरलङ्कादाहदक्षोऽस्तु भूत्यै।।[23]

उपमालङ्कारः- यथा- तत्रोच्चकैर्दिव्यगृहैर्दिवौकसां, कर्पूरकुन्दस्फटिकोडुपप्रभैः।
सौवर्णकुम्भैः शिखरेष्ववस्थितैः, सोरोंपुरी स्वर्गपुरीव शोभते।।[24]

---

19 तत्रैव-1/24
20 तत्रैव-4/71
21 तत्रैव-5/2,3
22 तत्रैव-5/15
23 तत्रैव-6/32
24 तत्रैव-1/10

विवेकशीलेषु बुधेषु हंसः, परापकृत्क्रूरनरेषु सिंहः।
यः सर्वदा स्वायतने विधेयानध्यापयामास सुरानिवेज्यः।।[25]

रत्नावली कनककान्तिमताऽथपत्या, रत्नावलीव शुशुभे सह कांचनेन।
साऽऽनन्दयत् पतिपितुर्जननीं प्रभक्त्या, गेहं स्वलङ्कृतवती खमिवेन्दुरोचिः।।[26]

उत्प्रेक्षालङ्कारस्योदाहरणानि यथा- तत्र सूकरक्षेत्रस्य वर्णनक्रमे-

विशालैर्विशालैर्महासौधशालै- स्तुषाराद्रिशृङ्गावभासैः सुभासैः।
लसच्छातकुम्भीयकुम्भाधिशोभैः, श्रियां सद्मभिः सद्मभिः शोभमानाम्।।[27]

अपि च- देवालयानां शिखरेष्वितस्ततः, प्रोत्कम्पिता वायुजवेन केतवः।
हिंसाऽपधर्माऽनृतदम्भसेवनात्, संवर्जयन्तीव नरानहर्निशम्।।

तत्र प्रतोल्यन्तरवर्तिवर्त्मनां, योच्चावचाऽवस्थितिकापरिस्थितिः।
सा ब्रूत उच्चावचकर्मणां गतिं, नृनादिशन्तीव सुकर्मशीलनम्।।

सुस्निग्धनत्रा----- तत्राह्वयन्तीव जनान् श्रमान्वितान्।। [28]

अपि च- तस्याः पवित्रे सलिले मनोरमे, स्नातुं प्रविष्टाननिमेषलोचनैः।
धर्मे नरान् प्रत्यनिमीलनं दृशां, सङ्केतयन्तीव झषा विचित्रगाः।।

तस्या जले ये विहरन्ति कच्छपाः,स्वाङ्गप्रगुप्तिं त उपस्थिताद् भयात्।
सन्दर्शयन्तो भयकाल आगते, सम्बोधयन्तीव निजाङ्गगोपनम्।।
यादोभिराजीवनमावहन्ति ये, ते शिक्षयन्तीव बकादयो जनान्।।[29]

एवमेवान्येषामलङ्काराणामपि विभिन्नेषु सन्दर्भेषु प्रचुरप्रयोगो दृश्यते। तत्र प्रयुक्तैरेतैरलङ्कारैः काव्ये रमणीयताया आधानं जायते। तेन काव्यमिदमलङ्कृतं काव्यमिति मन्ये।

महाकाव्येऽस्मिन् रीतियोजनाऽपि उत्तमरीत्या विहिता द्विवेदिमहोदयेन। काव्येऽस्मिन् वैदर्भीरीतेः सुमधुरप्रयोगो दृश्यते। महाकाव्येऽस्मिन् महाकविना सूक्तीनामपि समुचितसन्निवेशः कृतः। तेन काव्यमिदं सामाजिकानां कृते ग्राह्यमनुकरणीयञ्चास्ति।

यथा- न कालचक्रभ्रमणे विलम्बः।
सुजना हि हितार्थसाधने, न हितं घ्नन्ति परस्य कस्यचित्।।

---

25 तत्रैव-4/22

26 तत्रैव-5/1

27 तत्रैव-7/12

28 तत्रैव-1/11,13,14

29 तत्रैव- 1/19,20,23

सुमतौ सम्पद्वासः कुमतौ सर्वा विपत्तयः सन्ति।
भाले धात्रा लिखितवृजिनं मार्जितुं को हि शक्तः।।

विपदागमने विपश्चितामुचितं धृत्यवलम्बनं सदा।
अधृतिर्विपदः क्षणे नृणां, विपदं ह्येधयते विपद्वताम्।।

सत्यैव लोकोक्तिरियं जगत्यां कष्टान्तरैः सार्धमुपैति कष्टम्।
शोकार्ता हि प्रहतमतयो जीविताऽजीवितेषु।।

महाकाव्यस्यास्य य उदात्तसंदेशः पाठकानां कृते उपस्थापितः, स सन्देशः महाकविवचनेन एवमस्ति-

सः शोचनीयस्त्विह मानवाऽधमो, विमुच्य यः शास्त्रपथं क्रियापरः।
अनात्मबुद्धिर्गुरुमित्रवञ्चकः, पराऽपकारीन्द्रियभोगलोलुपः।।[30]

इत्थं भाषा-भाव-गुण-रीति-रस-छन्द-वाक्यार्थ-सूक्ति-चरित्रचित्रण-अलङ्कारादीनां तत्त्वानां सन्निवेशतो ग्रन्थस्यास्य महत्त्वं संस्कृतसाहित्यजगति प्रसरिष्यति इति मे मतिः।

# भारतीयदर्शनेषु हेत्वाभासविमर्शः

प्रो. हरेरामत्रिपाठी

भारतीयदर्शनानां मुख्यं प्रयोजनं मोक्ष एव विद्यते। न्यायनये षोडशपदार्थानां तत्त्वज्ञानान्मोक्षस्य प्राप्तिर्भवति, तेषुवन्यतमः पदार्थः हेत्वाभासो विद्यते। परम्परया मोक्षस्य प्रयोजकोऽपि हेत्वाभासो भवति। प्रमायाः करणत्वं प्रमाणस्य लक्षणमिति। चतुर्विधेषु प्रमाणेष्वन्यतमं प्रमाणमनुमानमिति। तत्र अनुशब्दार्थः पश्चाद् मानशब्दार्थः ज्ञानमिति। अनुमीयते इति व्युत्पत्त्या अनुमानमनुमितिः। अनुमीयतेऽनेन इति व्युत्पत्त्या अनुमानशब्दार्थः अनुमितिकरणमिति। व्याप्तिविशिष्टपक्षधर्मताज्ञानानन्तरं यज्जायते तदेव अनुमितिः तस्याः करणमनुमानम्। यथा सद्धेतुः तत्त्वनिर्णयस्य विजयस्य च प्रयोजको भवति तथैव हेत्वाभासोऽपि तत्त्वनिर्णयस्य विजयस्य च प्रयोजको भवति। अत एव गङ्गेशोपाध्यायैः उक्तम् "अथ हेत्वाभासास्त[1]त्त्वनिर्णयविजयप्रयोजकत्वान्निरूप्यन्ते" अथशब्दार्थः आनन्तर्यम्, तच्च ध्वंसकालीनत्वमवयव-ग्रन्थध्वंसकालीनत्वम् ज्ञानानुकूलव्यापारेऽस्यान्वयः निरूप्यते इत्यत्र निपूर्वकरूप धात्वर्थः ज्ञानानुकूलव्यापारः, मया इत्यस्य अध्याहारः क्रियते। तत्र तृतीयार्थः कृतिजन्यत्वम्, तदेकदेशे कृतौ समवायावच्छिन्न आधेयतासम्बन्धेन कृतिजन्यत्वस्यान्वयः, कृतिजन्यत्वस्य ज्ञानानुकूलव्यापारेऽन्वयः प्रयोजकत्वादित्यत्र पञ्चम्यर्थः

ज्ञानजन्यजिज्ञासाधीनत्वम्, तादृशप्रयोजकत्वस्य स्वप्रकारकत्वसम्बन्धेन ज्ञानेऽन्वयः कर्माख्यातार्थः विषयता, तस्याः प्रथमान्तपदोपस्थाप्ये दुष्टहेतौ स्वरूपसम्बन्धेनऽन्वयः। तथाच महावाक्यार्थबोधोऽत्र भवति अवयवग्रन्थध्वंसकालीनः यः मत्समवेतकृतिजन्यस्तत्त्वनिर्णयविजयप्रयोजकत्वप्रकारकज्ञानजन्य-जिज्ञासाधीनज्ञानानुकूलव्यापारस्तद्विषयतावन्तो दुष्टहेतवः इति। तत्त्वनिर्णयः प्रमितिकोटिनिर्णय[2]ः व्याप्तिपक्षधर्मताविशिष्टप्रकृतहेतुज्ञानमिव साध्याभावकोटिसाध्यकस्य हेतोः दुष्टत्वज्ञानं प्रकृतिप्रमितिकोटि-निर्णये जनकं भवति। यथा पर्वतःवह्निमान् इत्याकारक पर्वतविशेषकवह्निकोटिनिश्चयात्मकानुमितौ वह्निव्याप्तिपक्षधर्मताविशिष्टप्रकृत धूमहेतुज्ञानरूपवह्निव्याप्य धूमवान् अयं पर्वतः इत्याकारकपरामर्शस्य जनकता, तत्र जनकतावच्छेदकत्वेन प्रयोजकः यथा वह्निव्याप्तिपक्षधर्मताविशिष्टधूमहेतुः तथैव वह्न्यभावसाधकदुष्टजलहेतोः जनकतावच्छेदकत्वेन प्रमितवह्निकोटिनिश्चये प्रयोजकत्वं भवत्येव। कोशात् तत्त्वपदस्य ब्रह्मणि याथार्थ्यादौ शक्तिः अस्ति अतः प्रमितकोटिनिश्चये तत्त्वपदस्य लक्षणा एव सम्भवति अतः गदाधरः तमर्थं परित्यज्य भणति "तत्त्वनिर्णयः-साध्यवत्ताज्ञाने प्रमात्वनिश्चयः[1]" इयमनुमितिः प्रमा साध्यव्याप्तिपक्षधर्मताविशिष्टहेतुज्ञानजन्यत्वे सति प्रमात्वविरोध्यप्रमात्वग्रहजनक-

---

1. सामान्य निरुक्तिः, पृ. 1
2. अनुमानगादाधरी सामान्यनिरुक्तिः, पृ. 8

साध्याभावादिसाधकहेत्वदुष्टग्रहप्रतिबन्धकतादृशहेतुधर्मिकदुष्टत्वग्रहकालीनत्वाद् इत्युनुमानेनैव प्रकृतपक्ष-धर्मिकसाध्यानुमितौ प्रमात्वनिश्चयः पूर्वोक्तरीत्या सद्धेतुरिव दुष्टहेतुरपि प्रमात्वप्रयोजको भवति। परकीयाहङ्कारखण्डनं विजयः, अहमस्मादुत्कृष्टः इत्याकारकज्ञानजन्यसंस्कारविशेषोऽहङ्कारः, तन्नाशानुकूलव्यापारः विजयः तस्य प्रयोजको हेत्वाभासोऽपि भवति। अत एव गदाधरैः उक्तम्–

"विजयप्रयोजकत्वञ्च हेत्वाभासस्य[2] स्वज्ञानाधीनपरोक्तहेतुदोषोद्भावनद्वारा, व्याप्त्यादिविशिष्टहेतोश्च स्वज्ञानाधीनसन्न्यायप्रयोगद्वारा" अर्थात् मम हेतुः सन् समीचीनः व्याप्तिपक्षताविशिष्टत्वात्, तव हेतुः दुष्टः बाधितत्वात् व्यभिचरितत्वादित्यादिदिशा हेत्वाभासज्ञानात् परकीयहेतौ दोषाभिधानद्वारा हेत्वाभासज्ञाननिष्ठ जनकतावच्छेकविधया विजयप्रयोजकत्वं हेत्वाभासे उपलभ्यते। सद्धेतौ च व्याप्तिपक्षधर्मताविशिष्ट-सद्धेतुज्ञानाधीनपञ्चावयवघटितसन्न्यायप्रयोगद्वारा संद्धेतुज्ञाननिष्ठा या विजयकारणता तदवच्छेदकत्वेन विजयप्रयोजकत्वमिति।

हेतुवदा[3]भासन्ते इति व्युत्पत्त्या हेत्वाभासपदं दुष्टहेतुपरम्, हेतोः आभासाः हेत्वाभासाः इति व्युत्पत्त्या हेत्वाभासपदं हेतुदोषपरमिति। भाष्य[4]कारैः "हेतुलक्षणभावादहेतवो हेतुसामान्याद्धेतुवदाभासमानाः" इत्यनेन दुष्टहेतूनां व्युत्पत्तिं प्रदर्श्य दुष्टहेतूनामेव विभागः गौतमेन कृतः इति निरूपितम्। हेत्वाभासस्य सामान्यं लक्षणमनिरूप्य तस्य विभागः तेन कृतः, ततः प्रतीयते यत् सव्यभिचाराद्यन्यतमत्वं हेत्वाभासस्य लक्षणमिति। हेत्वाभासस्य विभागात् पूर्वं सामान्यलक्षणस्यापेक्षित्वात् गङ्गेशोपाध्यैरुक्तम्

1. अनुमितिकारणीभूताभावप्रतियोगित्वम्[5]।
2. यद्विषयकत्वेन लिङ्गज्ञानस्यानुमितिप्रतिबन्धकत्वं तत्त्व[6]म्।
3. ज्ञायमानं सदनुमितिप्रतिबन्धकत्वं तत्त्वम्[7]।

एतानि त्रीणि लक्षणानि गङ्गेशोपाध्यायैरुक्तानि।

अत्र वदन्ति कल्पे यद्विषयकनिश्चयस्य विरोधिविषयिताप्रयुक्तस्तदुत्तरमनुमितावनाहार्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्ट साध्यवैशिष्ट्यावगाहित्वस्य साध्यतावच्छेदक-विशिष्टसाध्यनिरूपित व्याप्तिविशिष्टहेतुतावच्छेदकविशिष्ट हेतुमत्त्वावगाहित्वस्य च द्वयोर्व्यतिरेकः[8] तत्त्वम्। इदं लक्षणं हेतुदोषस्य सिद्धान्तलक्षणम्। केचित्तु यादृशपक्षक यादृशसाध्यक यादृशहेतौ यावन्तो दोषाः संभवन्ति तावदन्यान्य[1]त्वम् इति।

1. अनुमानगादाधरी सामान्यनिरुक्तिः, पृ. 9
2. सामान्यनिरुक्तिगादाधरी, पृ. 10
3. सामान्यनिरुक्तिगादाधरी, पृ. 16
4. वात्स्यायनाचार्यः न्या. चतुर्ग्रन्थिका, पृ. 631 मिथिला विद्यापीठग्रन्थमाला 1967
5. सामान्यनिरुक्तिः, पृ. 18
6. सामान्य निरुक्तिः पृ. 19
7. सामान्य निरुक्तिः पृ. 20
8. न्यायकौस्तुभ, पृ. 1075

तत्तद्विषयितान्यतमविषयितानिरूपकतावच्छेदकधर्मवत्त्वम्[2] हेत्वाभासस्य लक्षणम्। यद्वा अनुमितितत्करणान्यतरप्रतिबन्धकज्ञानविषयो ध[3]र्मः इति तर्ककौमुदीकारः। अनुमितिप्रति[4]बन्धकतावच्छेदक-रूपवत्त्वं हेत्वाभासस्य लक्षणमिति शङ्करमिश्रो वदति। वर्धमानोपाध्यायस्तु ज्ञाय[5]मानत्वे सति अनुमितिप्रतिबन्धकत्वं हेत्वाभासत्वमिति भणति। अनुमित्य[6]साधारणदोषत्वं हेत्वाभासस्य लक्षणमिति भगीरथठ्कुरः। न्यायनये हेत्वाभासः पञ्चविधो भवति। शाक्या[7]स्तु त्रयः एव हेत्वाभासा इति स्वीकुर्वन्ति। न्यायमञ्जरीकारो वदति पक्षसत्त्वादिपञ्चरूपेषु मध्ये एकैकस्य वैकल्ये एकैको हेत्वाभासो भवति। यदा द्वयोर्वैकल्यं जायते तदा एतदतिरिक्तः [8]षष्ठो हेत्वाभासः स्यादिति एवं त्रयादिवैकल्येऽपि अन्यः हेत्वाभासः स्यादिति चेन्न असिद्धादावन्तर्भावात् पञ्चैव हेत्वाभासाः इति। सांख्यदर्शने यद्यपि सूत्रादौ हेत्वाभासस्य विवरणं नोपलभ्यते तथापि माठरवृत्तिटीकायां त्रयस्त्रिंश[9]त् हेत्वाभासाः सन्तीति प्रतिपादितं विद्यते। प्रत्यक्षाभासाः प्रत्यक्षाविरुद्धादयो नव, अन्ये हेत्वाभासाः चतुर्दश, असिद्धानैकान्तिकविरुद्धादयः। साधर्म्यवैधर्म्याभ्यां द्विविधं निदर्शनम् यथा महानसम्। इतरे निदर्शनाभासा दश[10] इति। परन्तु तत्रैव त्रिरूपो हेतुः इत्यनेन पक्षसत्त्वं, सपक्षसत्त्वं, विपक्षासत्त्वञ्चेत्यस्य विवरणं विद्यते, तेन प्रतीयते तत्र एकस्य रूपस्याभावे समस्तरूपेण त्रयः हेत्वाभासाः सन्ति इति माठरवृत्तिकारः स्वीकरोति। योगदर्शने हेत्वाभासस्य कुत्रापि उल्लेखो नास्ति, तथापि योगसूत्रस्य टीकाकारेण कृष्णवल्लभाचार्येण हेत्वाभासस्य पञ्चविधत्वं प्रतिपादितमिति। प्रभाकरगुरुमते प्रकरणसमकालातीतयोः हेत्वाभासत्वं नास्ति इति त्रित्वमेव हेत्वाभासानामिति। शास्त्रदीपिकायां मीमांसकप्रवरेण पार्थसारथिमिश्रेण अपि "असिद्धिः अनैकान्तिकत्वं बाधत्वञ्चेति त्रयो हेतु दोषा" इत्यनेन हेत्वाभासस्य त्रैविध्यमेव निरूपितम्। बौद्धमते अनुमानं द्विविधं स्वार्थानुमानपरार्थानुमानभेदात्। तत्र त्रिरूपतो लिङ्गादनुमेयार्थदर्शनं स्वार्थम्। त्रिरूपं पक्षसत्त्वं सपक्षसत्त्वं विपक्षासत्त्वञ्च तेन विशिष्टहेतुः सद्धेतुः। तत्र त्रयाणां रूपाणामेकस्यापि रूपस्यानुक्तौ साधनाभासाः वा हेत्वाभासाः। स च हेत्वाभासः असिद्धिनैकान्तिकविरुद्धभेदेन त्रिविधो भवति बौद्धनये। तत्र एकस्य रूपस्य धर्मिसम्बन्धस्य असिद्धौ सन्देहे वाऽसिद्धो हेत्वाभासः। स चतुर्विधः, उभयासिद्धः, अन्यतरासिद्धः, आश्रयासिद्धश्च। व्याप्त्यनिश्चये हेतोरनैकान्तिको दोषः। अनैकान्तिकः षड्विधो भवति साधारणः, असाधारणः, सपक्षैकदेशवृत्तिः विपक्षव्यापी, विपक्षैकदेशवृत्तिः विपक्षव्यापी, विपक्षैकदेशवृत्तिः सपक्षव्यापी, उभयपक्षैकदेशवृत्तिः, विरुद्धाव्यभिचारी च। द्वयोः रूपयोः विपर्ययसिद्धौ विरुद्धः वा सपक्षसत्त्वस्य,

---

1. दीधिति 2 सामा. पृ. 180
2. गदाधारी 2 हेत्वा. सामा., पृ. 31
3. त. कौ. 2 (म. प्र.2 पृ. 25
4. न्या. ली. कण्ठाभरणम्, पृ. 606 (न्या.ली0) चौखम्बा संस्कृतसीरिज आ.वाराणसी
5. न्यायलीलावतीप्रकाशः, पृ. 606
6. न्या.ली0 प्रकाशविवृत्तिः, पृ. 606 पं. 7
7. न्या.म. (न्या. सू. अ.2-आ.2सू.4) पृ. 604
8. न्या. मञ्जरी 604-605
9. सांख्यकारिका माठरवृत्ति, पृ. 8
10. सांख्यकारिका माठरवृत्ति, पृ. 9

विपक्षासत्त्वस्य च अभावसिद्धौ विरुद्धहेत्वाभासः इति।

प्रमाणवार्तिके धर्मकीर्तिना हेतुलक्षणप्रसङ्गे हेत्वाभासः उक्तः।

पक्षधर्मस्तदंशेन व्याप्तो हेतुः, त्रिधैव सः।
अविनाभावनियमात्, हेत्वाभासास्ततोऽ[1]परे॥

अत्र अविनाभावे सति हेतुत्वं सद्धेतोः लक्षणम्। अविनाभावरहितत्वे सति हेतुत्वं हेत्वाभासस्य लक्षणम्। जैनदर्शनेऽपि असिद्धविरुद्धानैकान्तिकभेदेन हेत्वाभासः त्रिविधो भवति। धर्मभू[2]षणेन असिद्धविरुद्धानैकान्तिकाकिञ्चित्करभेदेन हेत्वाभासस्य चातुर्विध्यं प्रतिपादितमिति। "तत्राप्रतीयमानस्वरूपो हेतुरसिद्धः" स च वादिप्रतिवाद्युभयसिद्धोऽन्यसिद्धश्चेति भेदेन द्विविधः। साध्यधर्मविपरीतव्याप्तिको हेतुः विरुद्धः। विरुद्धहेत्वाभासस्य अष्टौ[3] भेदाः निरूपिताः इति। पक्षविपक्षव्यापकः सपक्षावृत्तिः, पक्षव्यापको विपक्षैकदेशवृत्तिस्सपक्षावृत्तिश्च, पक्षविपक्षैकदेशवृत्तिस्सपक्षावृत्तिश्च, पक्षैकदेशवृत्तिस्सपक्षावृत्तिः विपक्षव्यापकश्च, पक्षविपक्षव्यापको अविद्यमानसपक्षश्च, पक्षविपक्षैकदेशवृत्तिरविद्यमानसपक्षश्च, पक्षव्यापको विपक्षैकदेशवृत्तिरविद्यमानसपक्षश्च, पक्षैकदेशवृत्तिर्विपक्षव्यापकोऽविद्यमानसपक्षश्चेति। "सन्दिग्धव्याप्तिको हेतुरनैकान्तिकः। स च द्विविधः सन्दिग्धविपक्षवृत्तिको निर्णीतविपक्षवृत्तिकश्चेति भेदात्।

आलङ्कारिकमतेऽपि हेत्वाभासः त्रिविधः। अत एव काव्यालङ्कारे भामहेनोक्तम्– "हेतुस्त्रिलक्षणो ज्ञेयो हेत्वाभासो विपर्ययात्" इति हेत्वाभासस्य व्युत्पत्तिद्वयं प्रदर्शितं परन्तु जयन्तभट्टः हेत्वाभासस्य व्युत्पत्तिं प्रदर्शयन् आह–

"अहेतवः हेतुवदाभासन्त इति हेत्वाभासाः'– इति।" अत्र हेत्वाभासस्य सामान्यं लक्षणमुक्तम्–सद्धेतोः लक्षणैकदेशयोगि[4]त्वे सति हेतुवदाभासनत्वं हेत्वाभासस्य लक्षणम्। महर्षिगौतमेन हेत्वाभासस्य पञ्चविधत्वमुक्तम्–

"सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला[5] हेत्वाभासाः" अत्र न्यायमञ्जरीकारैरुक्तम्–

यद्यपि पक्षसत्त्वं, सपक्षसत्त्वं, विपक्षासत्त्वम्, अबाधितत्त्वं असत्प्रतिपक्षितत्वञ्चेति क्रमो विद्यते अनया रीत्या साध्यसमविरुद्धसव्यभिचारातीतकालप्रकरणसमहेत्वाभासा इत्येव सूत्रं स्यादिति चेन्न "पक्षधर्मतादिलक्षणानाञ्च क्रमनियमाभावा[6]त्"। जयन्तभट्टोऽपि हेत्वाभासस्य पञ्चविधत्वस्यैव स[7]मर्थनं करोति। सूत्रेषु मध्ये कणादसूत्रमतिप्राचीनमिति विद्वांसः वदन्ति। कणादेनोक्तम्–

---

1. प्रमाणवार्तिकू स्वार्थानुमान, पृ. 216, 217
2. हेत्वाभासविमर्शः, पृ. 60
3. हेत्वाभासविमर्शः, पृ. 61
4. न्यायमञ्जरी (ओरियण्टल रिसर्च इस्टीट्यूट यूनिवर्सिटी ऑफ मैसूर, 1987), पृ. 604
5. न्यायसूत्र अ.2– आ. 2–सू. 4
6. न्यायमञ्जरी, पृ. 604
7. पञ्चैव हेत्वाभासा इति सिद्धम्, न्यायमञ्जरी, पृ. 605

"अप्रसिद्धोऽनपदेशोऽसन् संदिग्धश्चानपदेशः[1]" इति।

तथाच विरुद्धसव्यभिचारासिद्धाः हेत्वाभासाः भवन्तीत्यस्मिन् मते। उक्तसूत्रस्य व्याख्यां कुर्वन्नाह शङ्करमिश्रः– "अप्रसिद्ध इति व्याप्तोऽगृहीतव्याप्तिकश्च विपरीतव्याप्तिकश्च विरुद्धः"। अप्रसिद्धपदेन व्याप्यत्वासिद्धविरुद्धयोः बोधो भवति। असन् इति पक्षेऽसन् अपक्षधर्मः इत्यनेन असिद्धेः ग्रहणं भवति। सन्दिग्धपदार्थं वदति शङ्करमिश्रः "पक्षे साध्यसदसत्त्वत्वकोटिकसंशयजनकः, स च संशयः समानधर्मदर्शनात्। क्वचिदासाधारणधर्मदर्शनादिति अनेन रूपेण सव्यभिचारहेत्वाभासस्य त्रिविधत्वमुक्तं, साधारणानैकान्तिकः, असाधारणानैकान्तिकः, अनुपसंहारी चेति भेदात्। विवृत्तिकारो भणति कणादसूत्रे 'च' शब्दो विद्यते ततः सत्प्रतिपक्षबाधितयोः संग्रहो भवति तथाच कणादमतेऽपि विरुद्धा[2]सिद्धानैकान्तिक-सत्प्रतिपक्षबाधितभेदेन पञ्चविधः हेत्वाभास इति। असिद्धाद्यन्यतमत्वं हेत्वाभासस्य सामान्यं स्वरूपं तैरुक्तम्।

तत्रैव द्वितीयं लक्षणं विद्यते अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयादृशविशिष्ट-विषयिताव्यापिकाप्रतिबध्यता निरूपित प्रतिबन्धकता तादृशविशिष्टत्वं हेतुदोष[3]त्वम्। अपरञ्चापि लक्षणमस्ति "स्वावच्छिन्नविषयकत्वावच्छिन्नं यत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयिताक- विशिष्टनिरूपित-विषयितात्वव्यापकस्वावच्छिन्ननिरूप्यताकधर्मवत्त्वं हेतुदोष[4]त्वमिति। अथवा यादृशविशिष्टविषयकाना-हार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयोत्तरानुमितित्वव्यापकः विरोधिविषयताप्रयुक्तः पक्षविशेष्यतानिरूपित-साध्यप्रकारत्वतादृशविशेष्यतानिरुपितसाध्यव्याप्यहेतुप्रकारत्वोभयाभावः तादृशविशिष्ट[5]त्वं हेत्वाभासस्य लक्षणम्। प्रशस्तपादाचार्येण पक्षसत्त्व-सपक्षसत्त्व-विपक्षसत्त्वानां सद्धेतुधर्माणामभावेन विरुद्धा[6]सिद्धसन्दिग्धानां हेत्वाभासत्वं प्रत्यपादि। असिद्धविरुद्ध-सव्यभिचारानध्यवसितकालात्ययापदिष्टप्रकरणसमभेदात् षड् हेत्वाभासा शिवादित्येन प्रतिपादिताः। हेत्वाभासानां संख्याविषये बहवः विप्रतिपत्तयः सन्ति। तेषु काश्चन विप्रतिपती: निरूपयामि।

| क्र.सं. | शास्त्रम् | हेत्वाभासानां क्रमः संख्या च | |
|---|---|---|---|
| 1. | साहित्यशास्त्रम्- | असिद्धविरुद्धानैकान्तिकाः | त्रयः। |
| 2. | शाक्यमतम्- | असिद्धविरुद्धानैकान्तिकाः | त्रयः। |
| 3. | बौद्धमतम्- | असिद्धानैकान्तिकविरुद्धाः | त्रयः। |

1. कणादसूत्रम् अ. 3 आ. 1 सू. 15
2. वैशेषिकदर्शनम् अ. 3 आ. 1. सू. 15 विवृत्तिटीका (जयरामतर्कपञ्चाननविरचिता), पृ. 140 (व्यासप्रकाशन वाराणसी, 1991)
3. तदेव, पृ. 140-141 पं. 1
4. तदेव, पृ. 141 पं. 5-7
5. वैशेषिकदर्शनम् 141 पं. 10-13
6. प्रशस्तपादभाष्यम्, पृ. 290 भा.वि.प्र. वाराणसी 1966 पक्षः साध्यवान्, साध्यव्याप्यहेतुमांश्चेति समूहालम्बनानुमितित्वव्यापक।

4. जैनमतम्-

क- (जैनतर्कभाषानुसारम्) असिद्धविरुद्धानैकान्तिकाः त्रयः।

ख- धर्मभूषणमतम्- असिद्धविरुद्धानैकान्तिकाकिञ्चित्कराः, चत्वारः।

5. सांख्यमतम्-

क- प्रत्यक्षाभासाः प्रत्यक्षविरुद्धादयः नव

ख- असिद्धानैकान्तिकविरुद्धादयः चतुर्दश

त्रयस्त्रिंशत्

ग- निदर्शनाभासाः दश

6. योगदर्शनम्- सव्यभिचाराविरुद्धासिद्धसत्प्रतिपक्षबाधिताः पञ्च।

(कृष्णवल्लभाचार्यविरचितं स्वामीनारायणभाष्यम्)

7. वैशैषिकमतम्- (कणादः) अप्रसिद्धः असत् सन्दिग्धश्च त्रयः।

8. ''प्रशस्तपादभाष्यम्- प्रसिद्धः असत् अनध्वसितः त्रयः।

9. '' वैशेषिकसूत्रोपस्कारः- विरुद्धः, असिद्धः, सव्यभिचारश्च त्रयः।

10. '' चन्द्रकान्तभट्टाचार्यमतम्- अप्रसिद्धः, असत्, सव्यभिचारश्च त्रयः।

प्रकारान्तरेण- सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकालाः

11. ''कणादसूत्रविवृत्तिमतम् असिद्धविरुद्धसव्यभिचारसत्प्रतिपक्षबान्धिताः, पञ्च।

12. '' शिवादित्यमतम्- अनैकान्तिकविरुद्धप्रकरणसमासिद्धकालात्यया-

पदिष्टानध्यवसिताः षड्।

13. न्यायमतम्- सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीताः पञ्च

14. '' सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च

15. वैशेषिकमतम्- काश्यपः- विरुद्धासिद्धसन्दिग्धाः त्रयः।

16. न्यायमतम्- गङ्गेशोपाध्यायः- सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च।

17. विश्वनाथः अनैकान्तः विरुद्धः, असिद्धः प्रतिपक्षितः कालात्ययापदिष्टश्च पञ्च।

18. न्यायमतम्- तर्कभाषाकारः- असिद्धविरुद्धानैकान्तिकप्रकरणसमकालात्ययापदिष्टाः पञ्च।

19. विशिष्टाद्वैतवेदान्तमतम्- सिद्धित्रयमतम्- असिद्धविरुद्धानैकान्तिकाः त्रयः।

महर्षिणा उद्योतकरेण उक्तम्—हेतोः साधकत्वं ध[1]र्मः, हेत्वाभासस्य असाधकत्वं धर्मः इति। कालपुरुषवस्तुभेदानुविधानेन अपरिसंख्येयः हेत्वाभासो भवति। सामान्यतः साध्यवस्तूपग्रहेण हेतुहेत्वा[2]भासभेदः प्रपञ्चयमानः षट्सप्ततिशतम् इति। तत्र साध्यव्यापकधर्मभेदात् षोडशधा इति। तत्रोदाहरणानि दीयन्ते—

1. साध्यतज्जातीयान्यव्यापकः, प्रमेय[1]त्वान्नित्योऽनित्यो वेति।

2. साध्यतज्जातीयव्यापको विपक्षैकदेशवृत्तिः, गौरयं विषाणित्वात्।

साध्यतज्जातीयव्यापको विपक्षावृत्तिः, अनित्यः शब्द उत्पत्तिधर्मकत्वात्।

4. साध्यव्यापकस्तज्जातीयावृत्तिर्विपक्षव्यापकः, नित्य शब्द उत्पत्तिधर्मकत्वात्।

5. साध्यव्यापकस्तज्जातीयावृत्तिर्विपक्षैकदेशवृत्तिः, नित्यः शब्दः सामान्यविशेषवतोऽस्मदादि-बाह्यप्रत्यक्षकरणत्वाद् द्व्यणुकवद्।

6. साध्यव्यापकस्तज्जातीयविपक्षावृत्तिर्यथा नित्यः शब्दः सामान्यविशेषवत्त्वे सति श्रावणत्वात् घटादिवत्।

7. साध्यव्यापकस्तज्जातीयैकदेशवृत्तिर्विपक्षव्यापकश्च, अगौरयं विषाणित्वात्।

8. साध्यव्यापकस्तज्जातीयविपक्षैकदेशवृत्तिः, नित्यः शब्दोऽस्पर्शवत्त्वात्।

9. साध्यव्यापकस्तज्जातीयैकदेशवृत्तिः विपक्षावृत्तिः, अनित्यः शब्दः सामान्यविशेषवतोऽस्मदादि-बाह्यकरणप्रत्यक्षत्वात्।

10. साध्यतज्जातीयव्यापकोऽविद्यमानविपक्षः सिद्धान्तभेदाश्रयणेऽनैकान्तवादिनः, अनित्यः शब्द उत्पत्तिधर्मकत्वात्।

11. साध्यव्यापकस्तज्जातीयैकदेशवृत्तिविद्यमानविपक्षः, अनित्यः शब्दो बाह्येन्द्रियप्रत्यक्षत्वात्।

12. साध्यव्यापकस्तज्जातीयावृत्तिरविद्यमानविपक्षः, अनित्यः शब्दः श्रावणत्वात्।

13. साध्यव्यापकोऽविद्यमानसजातीयो विपक्षव्यापकः, नित्यः शब्दः उत्पत्तिधर्मकत्वात्।

14. साध्यव्यापकोऽविद्यमानस[1]जातीयो विपक्षैकदेशवृत्तिः, नित्यः शब्दो बाह्येन्द्रियप्रत्यक्षत्वाद्।

15. साध्यव्यापकोऽविद्यमानसजातीयो विपक्षावृत्तिः, नेदं निरात्मकं जीवच्छरीरम्, अनिन्द्रियाधिष्ठानत्वप्रसङ्गात्।

16. पक्षव्यापकोऽविद्यमानसपक्षविपक्षः, सर्वं नित्यं प्रमेयत्वात्। एते पक्षव्यापकाः षोडश, तत्र पञ्च हेतवः शेषाः हेत्वाभासाः। साध्यैकदेशवृत्तयः षोडश हेत्वाभासाः भवन्ति तदित्थं सन्ति।

---

1. न्यायचतुर्ग्रन्थिका, पृ. 631
2. तदेव, पृ. 631
3. न्यायचतुर्ग्रन्थिका, पृ. 632

1. साध्यैकदेशवृत्तिस्तज्जातीयविपक्षव्यापकः, पृथिव्यप्तेजोवाय्वाकाशानि अनित्यानि अगन्धवत्त्वात्।

2. साध्यैकदेशवृत्तिस्तज्जातीयव्यापको विपक्षैकदेशवृत्तिश्च सामान्यविशेषवदस्मदादिबाह्यकरणप्रत्यक्षे वाङ्मनसे अनित्यत्वात्

3. साध्यैकदेशवृत्तिस्तज्जातीयव्यापको विपक्षावृत्तिः, अनित्ये वाङ्मनसे उत्पत्तिधर्मकत्वात्।

4. साध्यैकदेशवृत्तिस्तज्जातीयवृत्तिर्विपक्षव्यापकः, नित्ये वाङ्मनसे उत्पत्तिधर्मकत्वात्।

5. साध्यैकदेशवृत्तिस्तज्जातीयावृत्तिर्विपक्षैकदेशवृत्तिः, सामान्यविशेषवद् अस्मदादिबाह्यकरणप्रत्यक्षे वाङ्मनसे नित्यत्वात्।

6. साध्यैकदेशवृत्तिस्तज्जातीयविपक्षावृत्तिः अनित्यः शब्दो विभागजविभागासमवायिकारणकत्वात्।

7. साध्यतज्जातीयैकदेशवृत्तिर्विपक्षव्यापकः, अनित्याः परमाणवोऽगन्धवत्त्वात्।

8. साध्य[1]तज्जातीयविपक्षैकदेशवृत्तिः, अनित्ये वाङ्मनसे अमूर्तत्वात्।

9. साध्यतज्जातीयैकदेशवृत्तिर्विपक्षावृत्तिः, अनित्ये वाङ्मनसे सामान्यविशेषवतोऽस्मदादिबाह्य करणप्रत्यक्षत्वात्।

10. साध्यैकदेशवृत्तिस्तज्जातीयव्यापकोऽविद्यमानपक्षः सिद्धान्तभेदाश्रयणेन, अनित्ये रूपविज्ञाने अमूर्तत्वाद् वेदनादिवत्।

11. साध्यतज्जातीयैकदेशवृत्तिरविद्यमानविपक्षः, अनित्ये चक्षुर्विज्ञाने अमूर्तत्वात् रूपादिवत्।

12. साध्यैकदेशवृत्तिस्तज्जातीयावृत्तिरविद्यमानविपक्षः, अनित्ये वाङ्मनसे श्रावणत्वात्।

13. साध्यैकदेशवृत्तिरविद्यमानसजातिर्विपक्षव्यापकः, नित्ये वाङ्मनसे उत्पत्तिधर्मकत्वात्।

14. साध्यैकदेशवृत्तिरविद्यमानस[1]जाति विपक्षैकदेशावृत्तिः

15. साध्यैकदेशवृत्तिरविद्यमानसजातिर्विपक्षावृत्तिः, नेदं निरात्मकं शरीरम् अनिन्द्रियाधिष्ठानत्वप्रसङ्गात्।

16. साध्यैकदेशवृत्तिरविद्यमानसपक्षत्पिक्षः[2], सर्वमनित्यं मूर्तत्वादिति। एते सर्वे हेत्वाभासाः सन्ति। एवं साध्यावृत्तयः षो[3]डशहेत्वाभासाः भवन्ति। विशेषणविशेष्यासिद्धिभेदेन चतुः[4]षष्टिः भेदाः हेत्वाभासस्य भवन्ति। एवमन्यतरासिद्धा इति व्यापकाव्यापकभेदात् द्वात्रिंशकं श[5]तम्। पुनर्व्यधिकरणविशेषणविशेष्यसन्दिग्धासमर्थविशेषणविशेष्यभेदेन द्वानवतं शतं[6] हेत्वाभासाः सन्तीति।

---

1. न्यायवार्तिकम् अ. 1 आ. 2-सू. 4 न्यायचतुर्ग्रन्थिका, पृ. 633
2. न्यायवार्तिकम्, पृ. 634
3. न्यायवार्तिकम्, पृ. 635 पं. 5
4. न्यायवार्तिकम्, पृ. 635 पं. 6
5. न्यायवार्तिकम्, पृ. 635 पं. 19
6. न्यायवार्तिकम्, पृ. 635 पं. 20

तत्र अनैकान्तिकः सव्यभिचारः[1], एकत्र अव्यवस्थितिः व्यभिचारः तेन सह वर्तते इति सव्यभिचारः[2]। अत्र वार्तिककारोऽपि वदति एकस्मिन् अन्ते नियतः ऐकान्तिकः, विपर्ययादनैकान्तिकः[3]। साध्यतज्जातीयवृत्तित्वे सति अन्यत्र वर्तते तद्व्यभिचारी, तद्वृत्तित्वम् व्यभिचारः। विश्वनाथपञ्चाननस्तु साधारणाद्यन्यतमत्वमनैकान्तिकस्य लक्षणम् उक्तवान्। सव्यभिचारस्य पूर्वपक्षीयलक्षणानि अधोलिखितानि सन्ति।

1. साध्यसंशयजनककोटिद्वयोपस्थापकपक्षधर्मताज्ञानविषयत्वे सति हेत्वभिमतत्वम्।
2. पक्षवृत्तित्वे सति अनुमितिविरोधिसम्बन्धाऽव्यावृत्तत्वम्।
3. साध्याव्याप्यत्वे सति साध्याभावाव्याप्यहेत्वाभासत्वम्।
4. साध्यवन्मात्रवृत्यन्यत्वे सति साध्याभाववन्मात्रवृत्यन्यत्वम्।
5. सपक्षविपक्षगतसर्वसपक्षविपक्षव्यावृत्तान्यतरत्वम्।
6. पक्षातिरिक्तसाध्यवन्मात्रवृत्त्यन्यत्वे सति पक्षातिरिक्तसाध्याभाववन् मात्रवृत्तिभिन्नत्वम्।
7. पक्षवृत्तित्वे सति विरुद्धान्यत्वे सति अनुमित्यौपयिकसम्बन्धशून्यत्वम्

**सव्यभिचारस्य सिद्धान्तलक्षणन्तु**

1. उभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वं सव्यभिचारस्य लक्षणम्।
2. विरुद्धान्यत्वे सति पक्षवृत्तित्वे सति अनुमितिविरोधिसम्बन्धाऽव्यावृत्तत्वम्

3. साध्यवन्मात्रवृत्यन्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्यत्वम् हेत्वाभासस्य लक्षणम्। तत्र साध्यवदन्यवृत्तिः साधारणानैकान्तिकः। साध्यासमानाधिकरणो हेतुः असाधारणानैकान्तिकः। अत्यन्ताभावाप्रतियोगिसाध्यकादिहेतुत्वम् अनुपसंहारिसव्यभिचारस्य लक्षणम्। त्रयाणामुदाहरणन्तु यथाक्रमो वर्तते। पर्वतः धूमवान् वह्नेः। शब्दः नित्यः शब्दत्वात्। सर्वम् अभिधेयं प्रमेयत्वात्।

सिद्धान्तमभ्युपेत्य तद्विरोधी विरु[4]द्धः इति सूत्रकारः। विपर्ययव्याप्तत्वेन निश्चितो विरुद्धो हेत्वाभास इति उदयना[5]चार्यः। विरुद्धो हेत्वाभासः स्वभावानुपलब्धिर्व्यापकानुपलब्धिर्व्यापकविरुद्धोपलब्धिभेदेन त्रिविधो भवति। साध्यव्यापकीभूताभावप्रतियोगित्वं विरुद्ध[6]त्वमिति विश्वनाथः। यथा अयं गौः अश्वत्वादित्यत्र अश्वत्वहेतुः विरुद्धः। अपरे तु मते साध्यानवगतसहचारः साध्याभावसहचारी विरुद्धः इति। सोऽपि विरुद्धः विधिसाधने त्रिविधो भवति साक्षात्साध्याभावव्याप्यत्वात्, साध्यव्यापकाभावव्याप्यत्वात्,

---

1. न्यायसूत्रम् अ. 1 / आ. 2–सू. 5
2. न्याय सू.भा. आ. अ. 1/ आ. 2. सू.भा. 5
3. न्यायवार्तिकम्, पृ. 642
4. न्यायसूत्रम् अ. 1 आ. 2. सू. 5
5. न्यायचतुर्ग्रन्थिका, पृ. 651
6. न्यायसिद्धान्तमुक्तावली, पृ. 281
7. न्या.सू. अ. 1 आ. 2 सू. 7

साध्यव्यापकविरुद्धोपलम्भात्। निषेधसाधनेऽपि त्रिविधः, प्रतियोग्युपलम्भात्, साध्यव्यापकाभावोपलम्भात्। साध्यव्यापकविरुद्धोपलम्भात्।

यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणस[1]मः। विमर्शाधिष्ठानौ पक्षप्रतिपक्षौ उभावनवसितौ प्रकरणम् तस्य विमर्शात् प्रभृतिप्राङ्निर्णयाद्यत् समीक्षणम् प्रकरणसमो निर्णयाय न प्रकल्पते। उदयनाचार्यस्तु[2]यस्मात् प्रक्रियमाणार्थजिज्ञासामात्रं भवति स प्रकरणसम इति। "विरुद्धयोः परामर्शे हेत्वोः स[3]त्प्रतिपक्षता" इति कारिकावली। स्वसाध्यविरुद्धसाध्याभावव्याप्यवत्तापरामर्शकालीन-साध्यव्याप्यवत्तापरामर्शविषयत्वं प्रकरणसमस्य लक्षणम्। प्रकृतहेतुकसाध्यविरोधिताग्रहविषयसाध्या-भावव्याप्यत्वप्रकारतानिरुपित हेतुतावच्छेदकावच्छिन्न प्रकारता निरूपित पक्षतावच्छेदकावच्छिन्न विशेष्यताशालिनिश्चयकालीनप्रकृतसाध्यव्याप्यत्वप्रकारता निरूपित हेतुतावच्छेदकावच्छिन्नप्रकारता निरूपित पक्षतावच्छेदकावच्छिन्न विशेष्यताशालिनिश्चयविषयत्वं सत्प्रतिपक्षस्य लक्षणम्। समानबलबोधितसाध्य-विपर्ययलिङ्गत्वं सत्प्रतिपक्षस्य पूर्वपक्षीयलक्षणम्।

सत्प्रतिपक्षस्य सिद्धान्तलक्षणन्तु 1- साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यकलिङ्गत्वम्।

2. विरोधिबोधकान्यगमतौपयिकरूपसम्पत्तिमत्तया ज्ञायमानेन प्रतिरुद्धकार्यत्वम्।

3. विरोधिपरामर्शप्रतिरुद्धकार्यकविशिष्टपरामर्शविषयत्वम्।

4. बांधोपस्थितिसमर्थपरामर्शकालीनसाध्यासिद्धिसमर्थपरामर्शविषयत्वम्।

सत्प्रतिपक्षस्य विभाजकलक्षणन्तु प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधित्वे सति प्रकृतपक्षसाध्य-ग्रहाविरोधिप्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधिरूपोन्नायकत्वम्।

साध्याविशिष्टः साध्यत्वात्साध्यसमः[3]। साध्येन अविशिष्टो यः साधनधर्मः साध्यवत् प्रज्ञापयितव्यः स साध्यसमो हेत्वाभा[4]सः। वाचस्पतिमिश्रस्य कथनं विद्यते यत् साध्याविशिष्टपदन्तु स्वरूपसिद्धैक-देशासिद्धाश्रयाद्यन्यथासिद्धानां संग्राहकमस्ति। उदयनाचार्यस्तु पक्षधर्मतया[5]न निश्चितः असिद्ध इति। विश्वनाथस्तु आश्रयासिद्धाद्यन्यतमत्वमसिद्धस्य लक्षणम्। असिद्धस्त्रिविधः आश्रयासिद्धः, स्वरूपासिद्धः, व्याप्यत्वासिद्धश्चेति भेदेन। असिद्धस्य पूर्वपक्षीयलक्षणानि इत्थं सन्ति।

1. व्याप्तिपक्षधर्मताविरहत्वम्।
2. व्याप्तिपक्षधर्मताविशिष्टाऽभाववत्त्वम्।
3. व्याप्तिपक्षधर्मताविशिष्टज्ञानविषयाऽभावत्वम्।

---

1. न्या. सू. आ. 1 आ. 2 सू. 7
2. न्या. च. ग्र., पृ. 655
3. कारिकावली 1177 का. 11
4. न्या. सू. आ. 1 आ. 2 सू. 8
5. न्यायसूत्रभाष्यम् अ. 1/ आ. 2/ सूत्रभाष्यम् 8- वार्तिकम्, पृ. 657
6. न्याय चतुर्ग्रन्थिका, पृ. 660

4. व्याप्तिपक्षधर्मताऽन्यतराऽभाववत्त्वम्।

5. व्याप्तिपक्षधर्मताप्रमितिविरहवत्त्वम्।

6. व्याप्तिप्रमितिपक्षधर्मताप्रमितिविरहान्यतरत्वम्।

7. व्याप्तिपक्षधर्मतोभयप्रकारकनिर्णयाऽभाववत्त्वम्।

8. पक्षतावच्छेदकरूपेण पक्षे हेतुतावच्छेदकरूपेण हेतोर्यद् विशिष्टज्ञानं साध्यतावच्छेदकविशिष्ट-साध्यावगाहितद्विरोधित्वम्।

9. विशिष्टपक्षविशिष्टसाधनवैशिष्ट्यविशिष्टसाध्यग्रहाविरोधियद्व्याप्तिग्रहविरोधि तदन्यत्वे सति परामर्शविरोधित्वम्।

**असिद्धेः सिद्धान्तलक्षणन्तु–**

साधारण्यकथिताऽसाधारण्यानुपसंहारित्वभिन्नं ज्ञानस्य विषयतया परामर्शविरोधितावच्छेदकं रूपमसिद्धिः तद्वत्त्वमसिद्धस्य लक्षणम्। आश्रयतावच्छेदकरूपविशिष्टाश्रयत्वमसिद्धिः तद्वत्त्वम् आश्रयासिद्धस्य लक्षणम्। आश्रयासिद्धेः बहुनि लक्षणानि भवन्ति विस्तरभयादत्रैव विरम्यते। पक्षे हेत्वभावः स्वरूपासिद्धिः। सोपाधिको हेतुः व्याप्यत्वासिद्धः।

कालात्ययापदिष्टः कालातीतः[1] इति सूत्रकारः। यस्य अपदिश्यमानस्य कालात्ययेन एकदेशो युज्यते स एकदेशात्ययात् काला[2]त्ययापदिष्टः इति।

“साध्यशून्यो यत्र पक्षत्वसौ बाधः[3]” इति कारिकावली।

बाधस्य पूर्वपक्षीय लक्षणानि अधोलिखितानि सन्ति।

1. साध्याभाववत्पक्षकत्वम्।

2. पक्षवृत्यभावप्रतियोगिसाध्यकत्वम्।

3. साध्याभावव्याप्यसामानाधिकरण्यम्। बाधसिद्धान्तलक्षणानि तु

1. पक्षे साध्याभावनिश्चयः।

2. प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोध्युन्नायकत्वे सति प्रकृतपक्षप्रकृतसाध्यग्रहविरोधित्वे सति प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोधित्वम्।

3. साध्याभाववत्त्वप्रमाविषयकपक्षकत्वञ्चेत्यादिकं लक्षणं बोध्यम्।

---

1. न्यायसूत्रम् अ. 1 आ. 2. सू. 9
2. न्यायचतुर्ग्रन्थिका- वार्तिकम् 665
3. कारिकावली ।। का. 77।।

# आगमशास्त्रे उन्मनी स्थितिः

डॉ. रविशंकरशुक्लः

परमात्मनः सङ्कल्पादित्यं सृष्टिरभूत्तस्यां सृष्टौ परमात्मा भवाब्धौ निमग्नानं जीवानामुद्धाराय निखिलज्ञानराशिम् निधिरूपां वेदविद्यां प्रददौ। उक्तञ्च शास्त्रेषु–

**अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा।**
**आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः।।**

**नामरूपं च भूतानां कर्मणाञ्च प्रवर्तनम्।**
**वेदशब्देभ्यः एवादौ निर्ममे स महेश्वरः।।**[1]

परमात्मना तस्यां वेदविद्यायां विस्तरेण निधिरूपत्वेन निगमागमसम्मतस्य सिद्धान्तस्य उपदेशः कृतः। रामचरितमानसे उक्तं विद्यते–

"नानापुरणनिगमागमसम्मतं यद् रामायणे निगदितं क्वचिदन्यतोऽपि", इति वचनानुसारं आगमःनिगमश्च द्वावपि सम्प्रदायौ पुरातनादेव भुवि प्रसृतौ विद्येते, भुवि मानवः स्वानुकूलं स्वशक्त्यानुसारं यथा–रुचिं ईश्वरोपदिष्टं मार्गमनुसृत्य सुकरेण ऐहिकामुष्मिकं फलमनुष्ठातुं प्रभवन्ति, अतो गीतायामपि उक्तं–

**"स्वेस्वे कर्मण्यभिरतः संसिद्धि लभते नरः।।**[2]

एतादृशे विशाले वाङ्मयेऽस्माकं निखिलशास्त्रेषु नाना सिद्धान्ताः अनेकानि मतानि बहवः सम्प्रदायाश्चोपलभ्यन्ते। उवतेषु बहुषु सम्प्रदायविशेषेसु अतिरहस्यभूतं परमगोपनीयं यदुत्कृष्टतमः सिद्धान्तः मतं वा विद्यते। तदधिकारिभेदेन गुरुपदिष्टविधिनैव ज्ञातुं प्राप्तुं च शक्यते।

कस्मादियमुन्मनी विद्या? इति विविदिषायामाह– ईश्वरोपदेशादियमुन्मनी विद्या। ईश्वराराधनात् लभ्या चेयं विद्या ईश्वरोन्मन्योः नास्ति कश्चन भेदः।

---

1. वाक्यपदीयभूमिका दृष्टव्याः, पृ. 32
2. श्रीमद्भगवद्गीता, अ. 18

**तत्र किं प्रमाणं शास्त्रमेव प्रमाणम् उच्यते हठयोगशास्त्रं**

**तारे ज्योतिसंयोज्य किञ्चिदुन्नमयेंऽभ्रुवौं।[3]**
**पूर्वयोगं मनोयुञ्जन्नुमनीकारकःक्षणात्।।**

उन्मनीमुद्रामाह—तारे नेत्रयोः कनीनिके ज्योतितारयोर्नासाग्रे योजनात्प्रकाशमाने तेजसि संयोज्य संयुक्ते कृत्वा भ्रुवौ किञ्चित् स्वल्पमुन्नयेद्रूर्ध्वं नयेत। पूर्वोक्तोऽन्र्तलस्यं बहिर्द्वष्टिरित्याकारको योगी मुक्तिर्यस्मिन तत्तादृशं मनोऽन्तः करणं युज़न् युक्तं कुर्वन् योगीक्षणान्मुहर्तादुन्मनीकारण उन्मन्यवस्थाकारको भवति। केचित् आचार्याः वदन्ति खेचरी–नुन्मन्योः नास्ति भेदः अपितु उभयोरवस्थयो ईषदन्तरं क्रियते आचार्यैं एतदनन्तरम् अनया कारिकया उभयोरैक्यं निश्चीयते।

**पुरस्ताच्चैव पूर्येत निश्चिता खेचरी भवेत्।**
**अभ्यस्ता खेचरी मुद्राप्युन्मनी संप्रजायते।।[4]**

पुरस्ताच्चैव पूर्वतोऽपि पूर्येत। सुषुम्नां प्राणेनेति शेषः। यदि तर्हि निश्चिताऽसंदिग्धा खेचरी खेचर्याख्या मुद्रा भवेदिति। यदि तु पुरस्तात्प्राणेन पूर्येत जिह्वामात्रेण पश्चिमतः पूर्येतू तर्हि मूढावस्थाजनिका। न निश्चिता खेचरी स्यादिति भावः। खेचरीमुद्राप्यस्ता सती उन्मनी संप्रजायते चित्तस्य ध्येयाकारावेशात्तुर्यावस्था रवेचरीमुद्राप्याभ्यस्ता भवतीत्यर्थः। सती उन्मनी संप्रजतायते चित्तस्य ध्योयाकारावेशात्तुर्यावस्था भवतीत्यर्थः।

आचार्याणामासयस्तु खेचरी यदा बहुभ्यस्ता स्यात तर्हि उन्मन्याः स्वरूपस्य प्रकृष्टत्वं साधयति।

**भ्रुवोर्मध्ये शिवस्थानं मनस्तत्र विलीयते।**
**ज्ञातव्यं तत्पदं तुर्यं तत्र कालो न विद्यते।।[5]**

भ्रुवोरिति— भ्रुवोर्मध्ये भ्रुवोरन्तराले शिवस्थानं शिवस्य ईश्वरस्य स्थानं शिवस्य सुखरूपस्यात्मनोऽवस्थानमिति शेषः तत्त तस्मिन् शिवे मनो लीयते शिवाकारवृत्तिप्रवाहवद्रभवातच्चित्तलयरूपं तुर्यं पदं जाग्रत्स्वप्नसुषुप्तिभ्यश्चतुर्थाख्यं ज्ञातव्यम्। तत्र तस्मिन् पदे कालो भृत्युर्न विद्यते। सूर्यचन्द्रयोर्निरोधादायुः क्षयकारकः कालः समयो न विद्यते इत्यर्थः। तदुक्तम्–

**"भोक्त्री सुषुम्ना कालस्य"** इति।

**निरालम्बं मनः कृत्वा न किञ्चिदपि चिंतयेत्।**
**स बाह्याभ्यन्तरे व्योग्नि घटवत्तिष्ठति ध्रुवम्।।[6]**

---

3 हठयोगप्रदीपिका, (4.48)

4. तत्रैव (4.47)

5. तत्रैव (4.48)

6. तत्रैव

निरालम्बमिति3। यो निरालम्बमालम्ब शून्यं मनः कृत्वा किंचिदपि रवेचरीमुद्रायां जाचमानब्रह्माकारमति न चिन्तयेत्वृत्तिः परवैराग्येण परित्यजेदित्यर्थः। स योगी बाह्याभ्यंतरे बाह्ये बहिर्भवे आभ्यंतरेऽभ्यन्तर्भवे च व्योम्न्याकाशं घटवत्तिष्ठति ध्रुवम्। निश्चितमेतत्। यथाकाशे घटो बहिरन्तश्चाकाशपूर्णे भवति तथा रवेचर्यामालम्बनपरित्यागेन योगी ब्रह्मणा पूर्णस्तिष्ठतीत्यर्थः।

**शक्तिमध्ये मनः कृत्वा शक्तिं मानसमध्यगाम्।**
**मनसा मन आलोक्य धारयेत्परमं पदम्।।**[7]

**खमध्ये कुरु चात्मानमात्ममध्ये च ख कुरु।**
**सर्वं च खमयं कृत्वा न किंचिदपि चिन्तयेत्।।**[8]

**सुषुम्नायै कुण्डलिन्यै सुधायै चन्द्रजन्मने।**
**मनोन्मन्यै नमस्तुभ्यं महाशक्त्यै चिदात्मने।।**[9]

प्रणमति–सुषुम्नायै इति। सुषुम्नामध्यनाडी तस्यै कुण्डलिन्यै आधार शक्त्यै चन्द्रोद्भ्रूमध्यस्थाज्जन्म यस्याः तस्यै सुधासै पीयूषायै मनोन्मन्यैतुर्यावस्थायै बिच्चैतन्यमा इमा स्वरूपं यस्याः सा तथा तस्यै। महती जडानां कर्मेन्द्रियमनसां पूतन्य सम्पादकत्वाः त सर्वोत्तमा याशक्तिः चिन्छक्तिः पुरुषरूपा तस्यै। तुभ्यमिति प्रत्येकं सम्बध्यते। वरिवस्या रहस्येऽपि उन्मन्यालक्षणप्रतिपादत्याचार्यः।

**सा शक्तिः परमासूक्ष्मा उन्मना शिवरूपिणी।**
**अस्तित्व मात्र मात्मानं क्षोभ्य क्षोभयते यदा।।**[10]

आचार्यः वदति। सा शक्ति परमसूक्ष्मा आत्मानं सततं क्षोभयते तस्याः अस्तित्वमात्रम् विद्यते। सा शिवरूपिणी विद्यते वस्तुतोह्युन्मनाख्यैव परविमर्शमयी पारमेश्वरी स्वातन्त्रशक्तिरहन्तैकरसा स्वरूप्यगोपन क्रीडा सदा-शिवानाश्रित पदात्मकं सर्वभावभास सूत्रेणभिन्तिकल्प समानरूपतया स्फुरति।

स्वात्माराम योगी उन्मनी अवस्थां सर्वोत्कृष्टवस्थां स्वीकरोति। भ्रूध्यानमेव तन्मते परमं पदम् विद्यते। यत्रारुह्य योगी आज्ञाचक्रस्य भेदनं करोति अर्थात् शिवशक्त्योः सामरस्यमनुभवति। अस्यैव परमावस्थायाः वर्णनं श्रीविद्यादिग्रन्थे विद्यतेतेष्वपि इयमवस्था परमावस्था उच्यते। अस्यामवस्थायां महात्रिपुरसुन्दर्याऽराधाना क्रियते साधकपुङ्गवैः। सैव परमावस्था, तंत्रवचनेन प्रमाणिभवति। यस्यांगुरोश्चरणपङ्कजमेवलभ्यमिति, आसु अवस्थाः आरुढेषु योगिना परासमर्चाऽपि अनुष्ठियते। यत्र उपास्योपासकयो सामरस्यं विद्यते। यथा देवता उपस्या भवति, साधकः उपासको भवति परशुरामकल्पसूत्रे साधनायाः प्रकारतया वर्णनं विद्यते। "आरम्भतरुण यौवन प्रौढ़तदन्तोन्मनानवस्थोल्लासेषु प्रौढान्ताः

7. योग प्रदीपिका (4.50)
8. तत्रैव (4.54-55)
9. तत्रैव (4.64)
10. तत्रैव (4.64)

समयाचाराः।। ततः परं यथाकामी। स्वैरव्यवहारेषु वीरावीरेष्व यथा मननादधःपातः"।।[11] तत्रः आरम्भो नाम उपासनाविषयकेच्छामात्रवत्वे सति तन्त्रशास्त्रान्मंभिज्ञल्वम्। सम्यग्गुरुं सम्पाद्य दीक्षितस्तदनन्तरं तन्त्रशास्त्रपिपदिशा शालित्वं तरुणोल्लासः। ततस्तच्छात्रविषयकज्ञानवत्वं यौवनोल्लारसः। ततः तच्छात्रविषयकतत्त्वज्ञानं शास्त्रप्रतिपादितध्यानं कर्तुमिहमानत्वं प्रौढ़ोल्लारसः। तदिच्छाऽनन्तरं किञ्चिदभ्यस्ते ध्यानवत्वं तदन्तोल्लासः। ततो ध्यानेन कंचित्कालं मनोलय शक्तिमत्वं उन्मनोल्लरसः।

तन्त्रशास्त्रे उन्मनी अवस्थायाः यावत् वर्णनं प्राप्यते तावच्चान्यशास्त्रेषु वर्णनं न प्राप्नोति। साधकाः सावधानेन चेतसा गुरूपदिष्ट विधिना एकैकस्याः क्रियायाः यथोपदिष्टं पालनं कुर्युश्चेमर्हि न्यूनं सफलं भविष्यन्ति अनयारीरित्या चितिशक्तेः प्रसन्नतामापन्ने सति किं न सिद्धयति भूतले। एवविधं फलम् उपासकेषु शीघ्रं संघटत एव। पराशक्तेरनुकम्पयैव आगमशास्त्रे प्रीतिर्जायते। आगमशास्त्रस्य गूढं रहस्यं तदज्ञानञ्च गुरू प्रसादादेव प्राप्तुं शक्यते। पूर्वजन्मनः संस्कारणामभावे कथं प्राणी? सत्कर्मषु प्रवर्तेत। तस्मादावश्यकं भवति सद् कर्मसु प्रवर्तनाय ईश्वरप्रणिधानम्। जीवस्य प्रत्येकं चेष्टितं कर्म ईश्वराधीनमेव भवति। अतः सर्वे प्राणिनः स्वीय उद्धाराय भगवच्छरणं ग्रहणन्तु इति। तस्य कृपया जीवमात्रस्य सर्वं शुभं भवति,भविष्यति च।

आगमशास्त्रे गुरुमन्त्रं विना गुरु मन्त्रस्य साधना न कर्तव्या। शास्त्रेऽस्मिन् गुरु दीक्षां विना यस्य कस्यापि प्रवेशोऽपि न भवति। साधनायाम्। यतो हि परमरहस्यभूतं आगमशास्त्रम्, पावना (पवित्रता) च अद्भुता, गुप्ता च साधनाक्रिया। पदे पदे साधनायां गुरोरावश्यकता भवत्येव। तस्मादुक्तञ्च गुरुरेव परागतिः...

इयं उन्मनी नामिका या विद्या सा गुरोपदेशं विना नैव ज्ञातुं शक्या केनाप्यन्यविधया तस्मादागमशस्त्रस्य साक्षात् उपदेष्टा भगवानादि देवः शिवोहि परमोगुरुः। ज्ञानार्णवतन्त्रे उन्मनी विद्या, परमाविद्या तस्या अतीव महिमा विद्यते, यथोक्तं शास्त्रे–

**उन्मनी नाम विधेयं भोगमोक्षफल प्रदाः।**
**पूर्वाम्नाये महाविद्या दक्षिणाम्नाय उच्यते।।[12]**

किं तर्हि 'स्वात्मप्रत्यक्षत्वादात्मविषयमेवैतल्लक्षणम्। न हि स्वात्म विषयं द्वेषमाकाक्ष्यं वा परः पश्यति।

योगिनीहृदये व्यापिका समना उन्मनी एतस्या स्वरूप मेत्थं विद्यते यथोक्तेषु वचनेसु ज्ञायते। व्यापिका विन्दुविलसत् त्रिकोणाकारता गता। समना विन्दु विलसत् ऋजुरेखा तथोन्मनाशक्त्यादीनां तु मात्रांशो मनोन्मनस्तथोऽन्मनी।। केयमुन्मना– "या शक्ति कारणत्वेन तदूर्ध्वे उन्मना सस्मृता। मनः संक्रमते यत्र तेन सा उन्मना स्मृता। नात्रकाल कलाभावो न तत्त्वं न च देवता। सुनिर्वाणं परं शुद्धं रुद्र

---

11. सर्वसाधारणक्रमः (सू. 68)
12. ज्ञानार्णवतन्त्रम् (9.60)

तदुच्यते। शिवशक्ति-रितिख्याता निर्विकल्पा निरञ्जना।" उन्मनी निराकारा निरुच्चारा यतो वाचो निवर्तन्ते अप्राप्य मनसा सह-उपर्युक्तवचसा ज्ञातं भवति उन्मनायाः यत्स्वरूपं विद्यते तत्कियतरहस्य पूर्णम्। आगम सम्प्रदाये अस्याः, बुद्भूता च महिमा सर्वत्र द्योत्यते। ज्ञानार्णवतन्त्रे उन्मनी विद्यापरमाविद्या तस्याऽतीव महिमा विद्यते। यथोक्तं शास्त्रे उन्मनी नाम विधेयं भोगमोक्षफलप्रदा। पूर्वाम्नाये महाविद्यादक्षिणाम्नाय उच्यते।

तन्त्र शास्त्रे उन्मनी अवस्थायाः यावत वर्णनं प्राप्यते। तावच्चान्य शास्त्रेषु वर्णनमेव न मिलति। साधकाः सावधानेन चेतसा गुरुपदिष्ट विधिना एकैकस्याः क्रियायाः सम्यग् पालनं कुर्युश्चेत्तर्हि नूनम्। सफलं भविष्यन्ति अनेनेवोपासना विधिना चितिशक्तेः प्रसन्नतामायपन्ने सति किं न सिद्धयति भूतले। इत्यादिकं फलं तु उपासकेषु सत्वरं संघटत एव। पराशक्तेरनुकम्पयैव, आगमशास्त्रे प्रीतिर्जायते। आगमशास्त्रस्य गभीरं रहस्यं तद्ज्ञानञ्च गुरुप्रासाददेव लभ्यते। पूर्वजन्मनः संस्कारस्तवे कथं प्राणी सत् कर्मसु प्रवर्तेत। तस्यादावश्यकं भवति सतकर्मसु प्रवर्तनम्। सत् कर्मणिप्रवर्तनं ..... ईश्वरानुग्रहादेव भवति। जीवस्य प्रत्येकं चेष्टितं कमईश्वराधीनमेव भवति। अतः सर्वे प्राणिनः स्वोद्धाराय भगवच्छरणं ग्रहणन्तु। तस्यैव कृपया जीवमात्रस्य शुभं भवति भविष्यति च।

**आगमशास्त्रे गुरु मन्त्रस्य देवस्य च साधनां विना गुरोकृपा न संभवति।**

शास्त्रेस्मिन् गुरुरनुग्रह विना कस्यापि प्रवेशोऽपि न भवति। अत्यन्तं रहस्यभूतं आगम शास्त्रम्? तेष्वपि इयमदभुता परम गुप्ता साधनाक्रिया गुरु विना नैव साध्या। यथामति यथाज्ञानं मयाऽत्र शोध लेखे विचारः कृतः।

# जैनदर्शने अभावस्य स्वरूपम्

डॉ. कुलदीपकुमारः

यद्यपी इदं सत्यमस्ति यदभावः स्वतन्त्रपदार्थत्वेन वैशेषिकदर्शन एवं उपलभ्यते तथापि वैशेषिकेतरदर्शनेष्वपि यत्र-तत्राभावस्य चर्चा इयती विस्तृता, येन स प्राप्यते गौणो नैव कथयितुं शक्यते। आवश्यकता वर्तते यदद्य सम्पूर्णस्य एतदविषयस्य आग्रहरहितं गम्भीरं तुलनात्मकं च परिशीलनं विधीयेत येन अस्मिन् सन्दर्भे किमपि व्यवधानरहितं, स्पष्टञ्च तथ्यं सम्मुखे भवेत्।

प्रस्तुते आलेखे जैनदर्शने अभावस्य किं स्वरूपम्? इति स्पष्टीकर्तुं प्रयासो विधीयते।

जैनदर्शने अभावविषयिणी चर्चा प्रामुख्येन आचार्यसमन्तभद्रविरचिते **'आप्तमीमांसा'** इति ग्रन्थे, आचार्यवीरसेनप्रणीते **'धवला'** इति ग्रन्थे उपलभ्यते। ये जनाः जैनदर्शने अभावस्य चर्चां सविस्तरं ज्ञातुम् इच्छन्ति तैः **उपर्युक्तौ** उभौ अपि ग्रन्थौ अध्येतव्यौ। मया प्रस्तूयमानस्य अस्य आलेखस्य अपि आधारत्वेन इदं ग्रन्थद्वयं वर्तते।

अभावस्य अर्थो भवति– असत् अर्थात् सत्ताया अभावः, परं जैनदर्शनानुसारेण अभावस्य आप लोके वर्तते सत्ता, अभावो नाम न वर्तते सर्वथा असन्। सः कथंचित् सन्नपि वर्तते, भावरूपोऽपि विद्यते, तस्मात् न असौ सर्वथा अभावरूपो वक्तुं शक्यते। इदमेव कारणं यत् आचार्यसमन्तभद्रेण अभावैकान्तवादिनां बलवत् खण्डनं कृतम्। यथा–

**अभावैकान्तपक्षेऽपि भावाः पह्लववादिनाम्।**
**बोधवाक्यं प्रमाणं न केवल साधनदूषणम्।**[1]

इत्थमेव आचार्यजयसेनेन भावान्तरस्वरूपमेव प्रतिपादितम्। यथा –

**भावान्तरस्वभावरूपी भवत्यभावः इति वचनातस।**[2]

तात्पर्यम् इदमेव अस्ति यद् जैनदर्शनानुसारेण अभावो भावान्तरस्वभावरूप एव भवति, न तु सर्वथाअभावरूपः।

अभावः आचार्यसमन्तभद्रेण चतुर्विधः स्वीकृतः प्रागभावः, प्रध्वंसाभावः, अन्योन्याभावः अत्यन्ताभावः चेति। अन्योन्याभावस्य अपरैनाम इतरेतराभावोऽपि वर्तते।

1. आप्तमीमांसा, आचार्यसमन्तभद्र, कारिका 12, भारतवर्षीय अनेकान्त विद्वत् परिषद्, 1989-90
2. प्रवचनसार, तात्पर्यवृत्ति, आचार्यजयसेन, गाथा–100

कार्यस्य प्रारम्भात् प्राक् **प्रागभाव** उच्यते। कार्यनाशादनन्तरं प्रध्वंसाभाव उच्यते। एकस्मिन् वस्तुनि अपरवस्तुनः भेदः अन्योन्याभाव इतरेतराभावो वा कथ्यते। एकस्य द्रव्यस्य पदार्थस्य वा अन्यस्मिन् पदार्थे सर्वथा अभावः अत्यन्ताभाव उच्यते।

जैनदर्शने प्रत्येकं पदार्थः द्रव्यपर्यायात्मकः अङ्गीकृतः। तदनुसारेण लोके तादृशं किमपि वस्तु न विद्यते, यत्र द्रव्यं पर्यायः च इमौ उभौ अंशौ न स्याताम् य् सर्वदा स्थायि अपरिवर्तनशीलं विद्यते तदेव द्रव्यम्। या न द्रव्यस्य परिवर्तनशीला अवस्था वर्तते सः पर्यायः। तद् यथा जीवो भवति द्रव्यं मतिज्ञानं श्रुतज्ञानं केवलज्ञानादीनि च तस्य पर्यायाः भवन्ति।

उपयुक्तेषु अभावेषु प्रागभावू प्रध्वंसभावः, अन्योन्याभावः च एते त्रयोऽभावाः पर्यायसम्बद्धाः वर्तन्ते। अवशिष्टः अत्यन्ताभाावः च द्रव्यसम्बद्धो वर्तते।

पर्यायः कार्यमपि उच्यते। प्रत्येकं कार्यस्थ पर्यायस्य वा विषये अस्माभिः इदं निश्चयेन ज्ञातव्यं यत् कोऽपि पर्यायः सदा स्वमिन् स्वसमये च अवतिष्ठेत। तदनुसारेण सः पर्यायः न तु कस्मिन् अपरिस्मन् पर्याये मिश्रितो भवति न चैव स्ज्ञवकीयनिर्धारितकालात् पूर्व पश्चात् वा उपलभ्यते।

इत्थं वयम् अवलोकयामः यत् प्रत्येकं पर्यायः त्रिभिः कोणैः अभावं साधयति। यथा-

1. सः स्वकीयनिर्धारितकालात् पूर्वं न विद्यते।
2. सः स्वकीयसमयादनरन्तरमपि नोपलभ्यते।
3. सः च स्वकीये काले उत्पद्यमाने कस्मिन् अन्यस्मिन् पर्यायेऽपि नैव उपलभ्यते।

जैनदर्शने इमे त्रयोऽभावा एव क्रमशः प्रागभवः, प्रध्वंसाभावः, अन्योन्याभावश्च उक्ताः।

अनेनैव प्रकारेण अस्मिन् लोके उपलभ्यमानानि सकलानि द्रव्याणि पृथक्-पृथक् भवन्ति। किमपि द्रव्यं कदापि केनापि द्रव्येण सह मिश्रितं न भवति। जीवद्रव्यं तथैव तिष्ठति न कदापि पुद्गलद्रव्यं भवति। पुद्गलद्रव्यमपि तथैव तिष्ठति न कदापि जीवद्रव्यं भवति। द्वयोः द्रव्ययोः मध्ये दृश्यमानः अयम् अभाव एव अत्रुयन्ताभाव इति कथ्यते।

जैनदर्शनानुसारेण एतेषां चतुर्णामभावनां स्वीकार्यता आवश्यकी वर्तते। अन्यथा वस्तुस्वरूपस्य सिद्धिः नैव भवितुमर्हति। अस्मिन् सन्दर्भे आचार्यसमन्तभद्रेण स्पष्टमेव उक्तम्, तथाहि –

**कार्यद्रव्यमनादि स्यात् प्रागभावस्य निह्नवे।**
**प्रध्वंसस्य च धर्मस्य प्रच्यवेऽनन्ततां व्रजेत्॥**
**सर्वात्मकं तदेकं स्यादन्यापोहव्यतिक्रमे।**
**अन्यत्र समवाये न व्यपदिश्येत् सर्वथा॥**[3]

---

3. आप्तमीमांसा, आचार्य समन्तभद्र, कारिका 10 व 11, भारतवर्षीय अनेकान्त विद्वत् परिषद्, 1989-90

अर्थात् प्रागभावो न स्वीक्रियते चेत् सर्वाणि कार्यद्रव्याणि अनादीनि सिद्ध्येयु:। यदि प्रध्वंसाभावः न स्वीक्रियते चेत् सर्वाणि कार्यद्रव्याणि अनन्तानि सिद्ध्येयु:। अत एव प्रागभावप्रध्वंसाभावौ अवश्यमेव मन्तव्यौ।

इत्थेव अन्योन्याभावस्य अस्वीकारे सति सर्वे पर्यायाः सर्वात्मकाः सिद्ध्येयु:। अत्यन्ताभावे अस्वीकृत सति कस्ञयापि पदार्थस्य असाधारणरूपकथनमेव न कर्तुं शक्यते, अत एव अन्योन्याभावोऽत्यन्ताभावश्च इति उभौ अपि मन्तव्यौ।

अन्योन्याभावस्य अत्यन्ताभावस्य च अस्वीकारे ये दोषाः समुत्पद्यन्ते तेषां समधिकस्पष्टीकरणार्थं श्रीजैनेन्द्रवर्णी अपि स्वकीये 'जैनेन्द्रसिद्धान्तकोश' इति ग्रन्थे आह–

"अन्योन्याभावे न स्वीकृते सति कस्यापि द्रव्यस्य विविधेषु पर्यायेषु कोऽपि भेदः न प्राप्यते, सर्वे पर्यायाः सर्वरूपात्मकाः भवन्ति, अत्यन्ताभावे अस्वीकृते सति सर्वैः वादिभिः स्वीकृतेषु मौलिकेषु तत्त्वेषु कोऽपि भेदो न दृश्यते। एकं तत्त्वमपरतत्त्वरूपमेव भवति। अस्यां दशायां जीवद्रव्यं चैतन्यगुणापेक्षया चेतनमेव अस्ति, पुद्गलद्रव्यञ्च अचेतनमेव अस्ति इति न कथयितुं शक्यते।'"[4]

अनेन प्रकारेण इदं स्पष्टमेव अस्ति यत् प्रागभावः, प्रध्वंसाभावः, अन्योन्याभावः, अत्यन्ताभावः चैते चत्वार एव अभावा अवश्यमेव स्वीकरणीयाः, अन्यथा वस्तुव्यवस्थायाः सम्यक्प्रकारेण सिद्धिः नैव भवितुमर्हति।

जैनदर्शने एतान् चतुरो भावान् अतिरिच्य पर्युदासः प्रसज्यः च इति अनयोः अपरयोः अभावयोः चर्चाऽपि उपलभ्यते। अभावविषयके प्रस्तुते निबन्धे तयोः अपि स्पष्टतया बोध अकावश्यको वर्तते।

यस्मिन् एकस्यापि वस्तुनेऽभावे अन्यस्य वस्तुनः सद्भावः गृह्यते सः पर्युदास उच्यते। तथा यत्र केवलम् अभावमात्रं गृह्यते सः प्रसज्यः कथ्यते। इदञ्च तत्त्वार्थवार्तिकस्य अधोलिखितेन कथनेन एव सिद्धयति। यथा–

**प्रत्यक्षादन्योऽप्रत्यक्ष इति पर्युदासः।................**
**प्रत्यक्षो न भवतीत्यप्रत्यक्ष इति प्रसज्यप्रतिषेधो।**[5]

अर्थात् यत् प्रत्ऱयक्षादन्यत् तदप्रत्यक्षं वर्तते इति पर्युदासः। यत् प्रत्यक्षं नास्ति तदप्रत्यक्षमिति वर्तते प्रसज्यः।

पर्युदासप्रसज्ययोः भेदं ज्ञापयन्तः श्रीमद्भट्टाकलंकदेवाः न्यायविनिश्चयवृत्तौ लिखन्ति।

"नयबुद्धिवशादभावौदासीन्येन भावस्य, तदौदासीन्येन चाभावस्य प्रधान्यसमर्पणे

---

4. तत्त्वार्थराजवार्तिकम्, श्रीद्भट्टाकलंकदेवः 2/8/18
5 . न्यायविनिश्चयवृत्तिः, श्रीमद्भट्टाकलंकदेवः 2/123/153

पर्युदासप्रसज्ययोर्विशेषस्य विकल्पनात्।"[6]

अर्थात् नयविवक्षावशाद् अभावस्य उदासीनतया भावस्य भावस्य उदासीनतया च अभावस्य प्राधान्यस्य समर्पणे सति पर्युदासप्रसज्ययोः चोभयोः विशेषतायाः विकल्पो भवति।

अभिप्रायोऽयमेवास्ति कस्यापि पदार्थस्य अभावेन अपरस्य पदार्थस्य सद्भावप्रदर्शनं तु पर्युदासो वर्तते। यथा प्रकाशाभाव एव अन्धकारः। तथैव पदार्थस्य सर्वथा अभावप्रदार्शनं प्रसज्यः वर्तते। यथा अस्मिन् भूतले घटाभावः इति। अयं प्रसज्यः।

प्रसज्यपर्युदासयोः भेदं वयमत्र सरलोदाहरणेन सरलतया द्रष्टुं शक्नुमः। यथा– "जलाभावे सति दुग्धं नास्ति" इति कथनं पर्युदास उच्यते। सर्वथा किमपि नास्ति चेत् तदा "दुग्धं नास्ति" इति कथनं वर्तते प्रसज्यःास

"मानवोऽयं अज्ञानी" इति अस्मिन् कथने 'अज्ञानी' इति पदस्य प्रयोगः पर्युदासरूपो वर्तते न तु प्रसज्यरूपः। "इदं पाषाणम् अज्ञानि' इति अस्मिन् कथने आज्ञानीति शब्दस्यार्थः प्रसज्यरूपो वर्तते न तु पर्युदासरूपः।

इत्थं वयमवलोकयामः यत् जैनदर्शने अभावस्वरूपस्य सुव्यवस्थिता चर्चा समुपलभ्यते। यदनुसारेण अभावः भाषान्तरस्वभावरूपो भवति न तु सर्वथा अभावरूपः। अयञ्च अभावः अपेक्षादृष्ट्या प्रागभावः प्रध्वंसाभावः, अन्योन्याभावः, अत्यन्ताभावः च इति एतेषु भेदेषु द्रष्टुं शक्यते। अन्यदृष्ट्या पर्युदासः प्रसज्यः च इति द्वैविध्येन द्रष्टुं शक्यते।

---

6. न्यायविनिश्चयवृत्तिः, श्रीमद्भट्टाकलंकदेवः 2/123/153

# शिक्षकाणां भावात्मकबुद्धेः विश्लेषणात्मकमध्ययनम्

**श्रीमति सवितारानय**

## भूमिका

प्राचीनकालाद् अद्य पर्यन्तम् अस्माकं समाजे गुरुः सर्वोच्चस्थानं लभते। न केवलं भारते अपितु सम्पूर्णविश्वे शिक्षणम् एकम् उदात्तव्यवसायरूपेण स्वीकृतम्। मानवेतिहासस्य श्रेष्ठाः विभूतयः एतद् व्यवसायं स्वीकृत्य समाजस्य, राष्ट्रस्य विश्वस्य च उत्थाने महत्वपूर्ण योगदानं कृतवन्तः। शिक्षकाणामुपरि देशनिर्माणस्य गुरुदायित्वं न्यस्तं वर्तते। राष्ट्रनिर्माणे शिक्षकः स्थापत्यकलाकारस्य भूमिकां निर्वहति। सः शिक्षया एतादृशानां नागरिकाणां निर्माणं करोति येन समाजस्य राष्ट्रस्य समुन्नतिः सम्भवति। शिक्षकस्य सफलप्रयासेन देशः विकासोन्मुखसमृद्धिं प्रति अग्रे गच्छति। एतस्मात् कारणात् शिक्षकस्य समाजे महत्वपूर्णं स्थानं विद्यते। शिक्षकस्य उद्देश्यं तावत् छात्राणां त्रयाणां पक्षाणां (ज्ञानात्मक-भावात्मक-क्रियात्मकपक्षाणां) विकासं कृत्वा तेषु संपूर्णव्यक्तित्वस्य विकसनम्।

## भावात्मकबुद्धेः अवधारणा

प्रस्तुताध्ययनं डेनियल्-गोलमैनमहोदयेन प्रतिपादितायाः भावात्मकबुद्धेः पंच-आयामानामुपरि आधारितमस्ति। डेनियल्-गोलमैनमहोदयेन भावात्मकबुद्धिः अनेन रूपेण परिभाषिता यद् - "भावात्मकबुद्धिः सा क्षमता यया वयं स्वस्य अन्येषां च भावनां जानीमः। वयं स्वम् अभिप्रेरयामः अथ च स्व-स्व संबंधेषु प्राप्तसंवेगान् समुचितप्रकारेण प्रतिबध्नामः। Daniel Goleman, (1995) "Emotional Intelligence is the capacity for recognizing our own emotions and those of others , for motivating ourselves and for managing emotions well in ourselves and in our relationship.")

उक्तपरिभाषाधारेण गोल्मैनमहोदयेन भावात्मकबुद्धेः पञ्चतत्त्वानामुल्लेखः कृतः , येषां कार्यं जगतः परिस्थितिभिः प्रभावितं भवति। अस्याः मानवव्यवहाराधिगमदृष्ट्या विशिष्टं महत्वमस्ति। प्रस्तुताध्ययनं गोल्मैनमहोदयस्य भावात्मकबुद्धेः सन्दर्भे अधोलिखितेषु पञ्चतथ्येषु आधारितमस्ति। एतानि तत्त्वानि सन्ति-

* **आत्माभिज्ञता**- अस्या प्रमुखविशेषतत्त्वं - आत्मावबोधः कस्मिन्नपि समये यथार्थभावनानाञ्च ज्ञानम्।

* **आत्मप्रबन्धनम्**- अस्य तात्पर्यमस्ति कस्मिन्नपि कार्यविशेषे अवरोधस्थाने सुगमतादृष्ट्या स्वसंवेगानां नियंत्रणम्, नकारात्मकेभ्यः संवेगेभ्यः विरक्तिः, समस्यासमाधानस्य च उद्देश्येषु एकस्य रचनात्मकस्य मार्गस्य चयनम्।

* **आत्माभिप्रेरणा**- वाञ्छितलक्ष्यप्राप्तये निरन्तरं प्रयासः, नकारात्मकावेगवृत्तिषु विजयप्राप्तिः, वाञ्छितपरिणामप्राप्तये स्वप्रलोभनस्य नियन्त्रणं चास्य मुख्याः विशेषतास्सन्ति।

* **तद्नुभूतिः** - एतस्यार्थोऽस्ति अन्येषां भावानां ज्ञानम्, तान्प्रति संवेदनशीलतायाः प्रदर्शनम्, एतस्यानुमितिकरणं यद्, अन्येषामनुभवः कीदृशः किञ्च ते इच्छन्ति इति।

* **सामाजिकी दक्षताः** - सामाजिकपरिस्थितीनां पूर्वानुमानम् अन्यैः सह अन्तःक्रियायाः सम्बधस्थापनम् अन्येषां संवेगाः, तेषां व्यवहारे निहितमार्गदर्शनस्य क्षमता चास्यान्तर्गते आगच्छन्ति।

**शोधस्यौचित्यम्**

प्रस्तुता भावात्मकबुद्धिः एकाऽधिगम्या योग्यताऽस्ति। क्षमताया अस्याः प्रयोगः जीवनकौशलस्य विकासाय कर्तुं शक्यते। अस्या अवधारणायाः महत्वं साम्प्रतिके युगे व्यावसायिकजीवने नूतनपरिस्थितौ च सामान्यरूपेणैव द्रष्टुं शक्यते। शिक्षायाः शिक्षणस्य प्रशिक्षणस्य च व्यवस्थासु अपेक्षितस्तरस्य प्रभावोत्पादनदृष्ट्याऽपि सम्प्रत्ययमुपयोगी अस्ति। परिप्रेक्ष्येऽस्मिन् सेवापूर्वशिक्षकेषु आत्माभिज्ञतायाः, आत्मप्रबन्धनस्य, अभिप्रेरणायाः, तदनुभूतिजन्यस्य सामर्थ्यस्य, सामाजिकदक्षतायाश्च संवर्धनाय बलप्रदानमावश्यकम्, येन ते छात्रैस्सह सामग्रीकरूपेण व्यवहरन् तैः सह सामञ्जस्यं स्थापयेयुः। अथ च तेष्वपि उक्तगुणान् संचारयित्वा एकस्य समरससमाजस्य स्थापनां कुर्युः। कस्मिन्नपि व्यवसाये प्रवेष्टुं व्यक्तेः शैक्षिकबुद्धिः महत्वपूर्णां भूमिकां निर्वहति, किन्तु व्यवसाये सफलतायै शैक्षिकबुद्ध्या सहैव भावात्मकबुद्धेः महती आवश्यकताऽस्ति। यदि शैक्षिकव्यवसायस्य चर्चा क्रियते तर्हि, अस्य व्यवसायस्य स्वीकृतपक्षेषु भावात्मकप्रज्ञायाः महत्वमधिकमस्ति। यतोहि शिक्षकः स्वप्रभावशीलतां सिद्धयन् छात्रैस्सह स्वात्म स्वसंतुष्टेरपि भारं वहति। धनोपार्जनसाधनत्वेन विवशतावशाच्छिक्षणव्यवसायं ग्रहीतृणां कीदृशं धारणा अस्तीत्यस्य ज्ञानं परमावश्यकं, अथ चेदं अस्य शोधपत्रस्यान्तर्गतं स्वीकृतम्।

**शोधोद्देश्यानि**-

प्रस्तुतशोधकार्यस्योद्देश्यानि अधोलिखितानि सन्ति-

* सेवापूर्वशिक्षकाणां भावात्मकबुद्धेः अध्ययनम्।

* सेवापूर्वशिक्षकाणां भावात्मकबुद्धेः विविधायामानाम् यथा आत्माभिज्ञता-आत्मप्रबन्धनम् -आत्माभिप्रेरणानां तद्नुभूत्याधारेण सामाजिकदक्षतानाञ्चाधारेण विश्लेषणात्मकमध्ययनम्।

* लिङ्गाधारेण सेवापूर्वशिक्षकाणां भावात्मकबुद्धेः तुलनात्मकमध्ययनम्।

**शोधपरिकल्पना**-

प्रस्तुतशोधाध्ययनार्थं मुख्यपरिकल्पना -"लिङ्गस्याधारेण सेवापूर्वशिक्षकाणां भावात्मकबुद्धेः विविधायामानां भेदो भवति " इति उपकल्पिता। यस्याः परीक्षणार्थं निम्नलिखिताः शून्यपरिकल्पनाः

निरूप्यन्ते।

**शून्यपरिकल्पना-1 -** लिङ्गस्याधारेण शिक्षकाणां भावात्मकबुद्धेः ''आत्माभिज्ञता'' इति आयामे कोऽपि सार्थकभेदो नास्ति।

**शून्यपरिकल्पना-2 -** लिङ्गस्याधारेण शिक्षकाणां भावात्मकबुद्धेः ''आत्मप्रबन्धनम्' इति आयामे कोऽपि सार्थकभेदो नास्ति।

**शून्यपरिकल्पना-3 -** लिङ्गस्याधारेण शिक्षकाणां भावात्मकबुद्धेः ''आत्माभिप्रेरणा' इति आयामे कोऽपि सार्थकभेदो नास्ति।

**शून्यपरिकल्पना-4 -** लिङ्गस्याधारेण शिक्षकाणां भावात्मकबुद्धेः ''तदनुभूतिः'' इति आयामे कोऽपि सार्थकभेदो नास्ति।

**शून्यपरिकल्पना-5 -** लिङ्गस्याधारेण शिक्षकाणां भावात्मकबुद्धेः ''सामाजिकदक्षताः'' इति आयामे कोऽपि सार्थकभेदो नास्ति।

**शोधकार्यस्य सीमांकनम्-**

शोधकार्ये स्वविषयस्य सुचारूसमाधानार्थं समस्यायाः सीमांकनमपेक्षते। अस्मिन् शोधपत्रे प्रतिदर्शरूपेण केवलं सेवापूर्वशिक्षकाणां चयनं कृतम्। अस्यान्तर्गते सेवापूर्वशिक्षकाणां भावात्मकबुद्धेः ज्ञानार्थं दिल्लीस्थितश्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठशिक्षाशास्त्रीपाठ्यक्रमसम्बद्धानां छात्राध्यापकानां चयनं कृतम्।

**शोधविधिः**

प्रस्तुतशोधाध्ययने वर्णनात्मकसर्वेक्षणविधेः प्रयोगः विहितः। अध्ययनमिदं परंपरागतसेवापूर्वशिक्षकैः सह संबद्धमस्ति। समग्रपरंपरागतसेवापूर्वशिक्षकाणामध्ययनं कठिनकार्यमस्ति। अत एव सम्भाव्यताऽऽधारित-प्रतिदर्शचयनविधौ यादृच्छिकविधेः प्रयोगं कृत्वा अस्मिन् शोधे श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठे प्रशिक्षणरतानां पञ्चचत्वारिंशत् (45) शिक्षकाणां, पञ्चदश (15) शिक्षिकाणां च चयनं कृतम्। भावात्मकबुद्धेः मापनार्थं स्वनिर्मितमापिन्याः प्रयोगं कृतम्। अस्यान्तर्गते त्रयो बिन्दवः यथा- आम्, नैव, अनिश्चिताधारेण प्रदत्तानां संकलनं कृतम्।

**शोधपरिणामः**

अध्ययनेऽस्मिन् शोधपरिणामानां विश्लेषणं भावात्मकबुद्धेः पंचायामानां (यथा-आत्माभिज्ञता-आत्मप्रबन्धन-आत्माभिप्रेरणा-तदनुभूति-सामाजिकदक्षतानाञ्च) एवञ्च प्रयुक्तानां श्रेणिनां (यथा-आम्-नैव-अनिश्चितानां) रूपेण कृतम्। प्रतिदर्शरूपे चितां सर्वेषां सेवापूर्वशिक्षकाणां शोधोपकरणरूपे प्रशासितमापिन्या अन्तर्गते भावात्मकबुद्धेः प्रत्येकायामस्य त्रिषु बिन्दुषु प्राप्ताभिमतानां आवृत्तिः

पृथक्-पृथक्रूपेण ज्ञात्वा ताऩ् शतानुसारं परिवर्तितम्। एतस्य विस्तृतविवरणं अग्रांकितसारिण्यां (i) वर्णितमस्ति।

## सारिणी- I

## सेवापूर्वशिक्षकाणां भावात्मकबुद्धेः पंचायामानामाधारेण वर्णनम्

| क्र.सं. | श्रेण्यः \ आयामः | | आत्माभिज्ञता | आत्मप्रबन्धनम् | आत्माभिप्रेरणा | तद्नुभूतिः | सामाजिकदक्षताः |
|---|---|---|---|---|---|---|---|
| 1. | आम् | f | 312 | 281 | 315 | 301 | 302 |
| | | f% | 86.7% | 78% | 87.5% | 83.6% | 83.9% |
| 2. | नैव | f | 35 | 51 | 30 | 43 | 37 |
| | | f% | 9.7% | 14.2% | 8.3% | 11.9% | 10.3% |
| 3. | अनिश्चितम् | f | 13 | 28 | 15 | 16 | 21 |
| | | f% | 3.6% | 7.8% | 4.2% | 4.4% | 5.8% |

उपरोक्तसारिण्याः अवलोकनेन इदं स्पष्टं ज्ञायते यत् सेवापूर्वशिक्षकाणां भावात्मकबुद्धेः प्रथमायामं 'आत्माभिज्ञतायाः' त्रिसृषु श्रेणिषु यथा आम्-नैव-अनिश्चितं तेषु क्रमशः 86.7% , 9.7% तथा च 3.6% द्वितीयायामे आत्मप्रबन्धने क्रमशः 78% , 14.2% , तथा च 7.8% तृतीयायामे आत्माभिप्रेरणायां 87.5%, 8.3%, तथा च 4.2% चतुर्थायामे तद्नुभूत्यां 83.6%, 11.9% , तथा च 4.4%, पंचमायामे सामाजिकदक्षतायां 83.9%, 10.3%, 5.8% प्राप्तम्। भावात्मकबुद्धेः पंचायामानां आम्, न तथा च अनिश्चितश्रेण्यामन्तर्गते प्राप्तसमेकितप्राप्तांकानां प्रतिशतं स्पष्टरूपेण वर्णनार्थं स्तम्भाकृतिभिः एतेषां सर्वेषां तुलनात्मकं वर्णनं प्रस्तुतं कृतम्-

## स्तम्भाकृतिः-(i)

## पंचायामानां आवृत्तीनां प्रतिशताधारेण निर्मितस्तम्भाकृतिः

समेकितप्राप्तांकानां प्रतिशतम्




भावात्मकबुद्धेः पंचायामाः द्वितीयविश्लेषणे सेवापूर्वशिक्षकाणां भावात्मकबुद्धेः प्रत्येकायामास्य समेकितप्राप्तांकाः पृथक्-पृथक् ज्ञातम्। एतेषां प्राप्तांकानां आवृत्तयः ज्ञात्वा उच्चतमं (18-14), औसतमं (7-13) तथा च निम्नतमं (1-6) इत्येवं त्रिषु वर्गेषु विभज्यते। एतेषु वर्गेषु प्राप्तावृत्तिनां प्रतिशते रूपान्तरितं कृत्वा द्वितीयायां सारिण्यां प्रस्तुयते।

## सारिणी-II

### भावात्मकबुद्धेः आयामानां समेकितप्राप्तांकानामाधारेणनिर्मितवर्गत्रयाणां विश्लेषणम्

| क्रसं | आयामम् / वर्गनाम | आत्माभिज्ञता | | आत्मप्रबन्धनम् | | आत्माभिप्रेरणा | | तद्नुभूतिः | | समाजिकदक्षताः | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| | | f | f% | f | f% | f | f% | f | f% | f | f% |
| 1. | उच्चतमः(14-18) | 57 | 95% | 51 | 85% | 56 | 93% | 52 | 86% | 53 | 88: |
| 2. | औसतमः(7-13) | 3 | 5% | 8 | 13% | 4 | 7% | 8 | 13% | 7 | 12: |
| 3. | निम्नतमः(1-6) | 0 | 0% | 1 | 2% | 0 | 0% | 0 | 0% | 0 | 0: |

उपरोक्तसारिण्या इदं स्पष्टं भवति यत् उच्चवर्गे भावात्मकबुद्धेः पंचायामषु आवृत्तिनां प्रतिशतं उच्चवर्गे क्रमशः 95% , 85% , 93% , 86% , 88%, औसतवर्गे क्रमशः 5%, 13% 7%, 13%, 12%, अथ च निम्नवर्गे आत्माभिज्ञता इति आयामे 0%, आत्मप्रबन्धनमिति आयामे 2%, तथा च अन्यायामेषु 0% प्राप्तम्।

## स्तम्भाकृतिः-(ii)

### भावात्मकबुद्धेः पंचायामानां समेकितप्राप्ताकांनामाधारेण निर्मितत्रयवर्गाः

### भावात्मकबुद्धेः आयामाः




उपरोक्तस्तम्भाकृत्या इदं स्पष्टं जातं यत् उच्चवर्गे सर्वाधिकावृत्तिः आत्माभिज्ञता इति आयामस्यान्तर्गते अस्ति। तदनन्तरमात्मप्रबन्धनं तद्नुभूत्यायामे प्रायः समानं तथा च आत्माभिप्रेरणा इति आयामस्य तुलनायां सामाजिकदक्षता इति आयामे न्यूनमस्ति। औसतवर्गे आत्मप्रबन्धनतद्नुभूत्यां समानावृत्तिः तदनन्तरं सामाजिकदक्षता इति आयामे तथा च आत्माभिज्ञता-आत्माभिप्रेरणावर्गे अतिन्यूनावृत्तिः प्राप्ता। निम्नवर्गे आत्मप्रबन्धने अतिन्यूनमावृत्तिः तथा च आत्माभिज्ञता-आत्माभिप्रेरणा-तद्नुभूतिः-सामाजिकदक्षताः आयामेषु प्रायः न इति आवृत्तयः प्राप्ताः सन्ति।

### निरूपितशून्यपरिकल्पनानां परीक्षणम्

प्रस्तुतशोधपत्रे निरूपितशून्यपरिकल्पनानां परीक्षणार्थं सेवापूर्वशिक्षकाणां भावात्मकबुद्धेः पंचायामेषु समेकितप्राप्तांकानां लिङ्गाधारेण मध्यमानं (M), प्रामाणिकविचलनं( s), मध्यमानस्य प्रामाणिकत्रुटिः (S.E.M)] मध्यमानेषु भेदस्य(अन्तरं) प्रामाणिकत्रुटिः (S.E.D.M.), तथा च t मानानां (value) गणनां कृत्वा परीक्षणं कृतम्। अस्य विस्तृतं विवरणं तृतीयायां सारिण्यां वर्णितमस्ति।

## सारिणी-III

### लिङ्गाधारेण भावात्मकबुद्धेः विविधायामस्य मध्यमानेषु टी-परीक्षणम्

| संवेगात्मक-कप्रज्ञायाः विविधायामाः | लिङ्गम् | मध्यमानम् (M) | (σ) | D ($M_1$-$M_2$) | σD | df | t-मान | t-सारिणीमानम् |
|---|---|---|---|---|---|---|---|---|
| आत्माभिज्ञता | पुरूषः | 11.2 | 0.4 | 0.8 | 0.11 | 58 | 7.3 | .05 =2.01 |
| | महिला | 10.4 | 0.5 | | | | | .01 =2.68 |
| आत्मप्रबन्धनम् | पुरूषः | 10.2 | 0.6 | 0.1 | 0.19 | 58 | 0.52 | .05 =2.01 |
| | महिला | 10.3 | 0.6 | | | | | .01 =2.68 |
| आत्माभिप्रेरणा | पुरूषः | 10.9 | 0.5 | 0.5 | 0.91 | 58 | 0.54 | .05 =2.01 |
| | महिला | 11.4 | 3.4 | | | | | .01 =2.68 |
| तद्नुभूतिः | पुरूषः | 11.04 | 0.5 | 1.14 | 0.19 | 58 | 6 | .05 =2.01 |
| | महिला | 9.9 | 0.6 | | | | | .01 =2.68 |
| सामाजिकदक्षताः | पुरूषः | 10.7 | 0.5 | 0 | 0.19 | 58 | 0 | .05 =2.01 |
| | महिला | 10.7 | 0.6 | | | | | .01 =2.68 |

तृतीयसारिण्याः अवलोकनेन ज्ञायते यत् भावात्मकबुद्धेः आत्माभिज्ञता इति आयामस्यान्तर्गते लिङ्गाधारेण प्राप्तं टी इति मानं 7.3 प्राप्तम्। आत्मप्रबन्धनम् इति आयामे टी मानं 0.52, आत्माभिप्रेरणा इति आयामे 0.54, तद्नुभूतिः इति आयामे 6 तथा च सामाजिकदक्षताः इति आयामे 0 (शून्यं) प्राप्तम्। एतेषां टी मानानामाधारे अस्मिन् अध्ययने निरूपितशून्यपरिकल्पनानां परीक्षणं कृतम्। आत्माभिज्ञता इति आयामस्यान्तर्गते लिङ्गाधारेण प्रेक्षितमध्यमानयोः मध्ये भेदः 0.5 तथा च 0.1 स्तरद्वयम् असार्थकमस्ति। अतः निरूपितशून्यपरिकल्पनां प्रथमां नैव स्वीक्रियते। आत्मप्रबन्धनमात्माभिप्रेरणा एतयोः द्वयोः आयामयोः अन्तर्गते लिङ्गाधारणे प्राप्तं टी इति मानं द्वयोः विश्वासस्तरयोः न्यूनमस्ति। अतः प्रेक्षितभेदः असार्थकः तथा च निरूपितशून्यपरिकल्पनां द्वितीयां अथ च तृतीयां स्वीक्रियते। तद्नुभूतिः इति आयामस्यान्तर्गते लिङ्गाधारेण प्रेक्षितमध्यमानयोः मध्येः भेदः द्वयोः स्तरयोः सार्थको भवति। अतः शून्यपरिकल्पना तुरीयायाः अस्वीकृताः तथा च वैकल्पिकपरिकल्पना स्वीकृता। सामाजिकदक्षता इति आयामे लिङ्गाधारेण प्राप्तं टीमानं द्वयोः विश्वासस्तरयोः मानं न्यूनमस्ति। अतः प्रेक्षितः भेदः असार्थकः तथा च शून्यपरिकल्पना पंचमी स्वीकृता जाता।

## सामान्यीकरणं निष्कर्षनिरूपणचं

प्रकृताध्ययनस्य परिणामानामाधारेण सामान्यीकरणं निष्कर्षनिरूपणचं द्वयोः चरणयोः कृतम्। प्रथमचरणे सेवापूर्वशिक्षकाणां भावात्मकबुद्धेः पंचायामानां एवञ्च प्रयुक्तानां श्रेणिनाम् आधारेण तथा च द्वितीयचरणे प्रत्येकायामास्य समेकितप्राप्तांकाधारेण विश्लेषणं कृतम्। एतस्य विस्तृतवर्णनम् अधोलिखितमस्ति।

सेवापूर्वशिक्षकाणां भावात्मकबुद्धेः पंचायामानां (यथा-आत्माभिज्ञता-आत्मप्रबन्धनम-आत्माभिप्रेरणा-तद्नुभूतिसामाजिकदक्षतानाञ्च) एवञ्च प्रयुक्तानां श्रेणिनां (यथा-आम्-नैव-अनिश्चितानां) प्रतिशताधारे तथा च पंचायामानां वर्गत्रयानामाधारेण विश्लेषणेन अधोलिखितसामान्यीकरणस्य निष्कर्षस्य च निरूपणम् अभवत्।

* सेवापूर्वशिक्षकाणां भावात्मकबुद्धेः आत्माभिज्ञता इति आयामः आम् इति श्रेण्यन्तर्गते सर्वाधिको वर्तते। तदनन्तरं नैव-वर्गे तथा च अतिन्यूनं अनिश्चितम् इति वर्गे वर्तते।
* सेवापूर्वशिक्षकाणां भावात्मकबुद्धेः आत्मप्रबन्धनायामः आम् इति श्रेण्यन्तर्गते सर्वाधिको वर्तते। तदनन्तरं क्रमशः नैव तथा च अनिश्चितम् इति वर्गे।
* सेवापूर्वशिक्षकाणां भावात्मकबुद्धेः आत्माभिप्रेरणा इति आयामः आम् इति श्रेण्यन्तर्गते सर्वाधिको वर्तते। तदनन्तरं क्रमशः नैव तथा च अनिश्चितम् इति वर्गे।
* सेवापूर्वशिक्षकाणां भावात्मकबुद्धेः तद्नुभूत्यायामः आम् इति श्रेण्यन्तर्गते सर्वाधिको वर्तते। तदनन्तरं क्रमशः नैव तथा च अनिश्चितम् इति वर्गे।
* सेवापूर्वशिक्षकाणां भावात्मकबुद्धेः सामाजिकदक्षता इति आयामः आम् इति श्रेण्यन्तर्गते सर्वाधिको वर्तते। तदनन्तरं क्रमशः नैव तथा च अनिश्चितम् इति वर्गे।
* सेवापूर्वशिक्षकाणां भावात्मकबुद्धिः आम् श्रेण्याम् आत्माभिज्ञता-आत्माभिप्रेरणा च उभयोः आयामयोः सर्वाधिके समाने अथ च तद्नुभूतिः सामाजिकदक्षता च एतयो आयामयोः समानमेव प्राप्तम्। तदनन्तरम् आत्मप्रबन्धनमायामे अतिन्यूनं प्राप्तम्।
* सेवापूर्वशिक्षकाणां भावात्मकबुद्धिः आत्माभिज्ञता-आत्मप्रबन्धनायामयोः नैव इति श्रेण्यां सर्वाधिकं समानञ्च प्राप्तम्। तदन्नतरं क्रमशः तद्नुभूत्यां तथा च सामाजिकदक्षतायां प्राप्तम्। आत्माभिप्रेरणान्तर्गते अतिन्यूनं प्राप्तमस्ति।
* सेवापूर्वशिक्षकाणां भावात्मकबुद्धिः आत्मप्रबन्धनसामाजिकदक्षता चेति आयामयोः अन्तर्गते अनिश्चितम् इति श्रेण्यां सर्वाधिकं समानञ्च अस्ति तथा च आत्माभिप्रेरणायां तद्नुभूत्यां च समानमेव अस्ति। आत्माभिज्ञता इति आयामे अतिन्यूनमस्ति।
* सेवापूर्वशिक्षकाणां भावात्मकबुद्धिः उच्चवर्गस्यान्तर्गते आत्माभिज्ञताऽयामे सर्वाधिकमस्ति। तदनन्तरमात्मप्रबन्धनं तद्नुभूत्यायामे समानमेव प्राप्तम्। आत्माभिप्रेरणा इति आयामस्य तुलनायां

सामाजिकदक्षता इति आयामे अतिन्यूनं प्राप्तम्।

* सेवापूर्वशिक्षकाणां भावात्मकबुद्धेः औसत इति वर्गे आत्मप्रबन्धनतद्नुभूत्यां समानमेव प्राप्तम्। तदनन्तरं सामाजिकदक्षता इति आयामे सामान्यं तथा च आत्माभिज्ञता-आत्माभिप्रेरणा च एतयोः वर्गयोः अतिन्यूनं प्राप्तम्।

* सेवापूर्वशिक्षकाणां भावात्मकबुद्धेः निम्नवर्गस्यान्तर्गते आत्मप्रबन्धनायामे अतिन्यूनं तथा च आत्माभिज्ञता-आत्माभिप्रेरणा-तद्नुभूति-सामाजिकदक्षताश्च एतेषु आयामेषु प्रायः न इति प्राप्तम्।

उपरोक्तसामान्यीकरणस्याधारेण अस्य निष्कर्षस्य निरूपणं जातं यत् सेवापूर्वशिक्षकाणां भावात्मकबुद्धेः पंचायामानां तिसृषु श्रेणिषु आम् इति श्रेण्यां सर्वाधिकावृत्तिः प्राप्ता। या तेषां उच्चभावात्मकबुद्धेः प्रदर्शनं करोति। सेवापूर्वशिक्षकाणां भावात्मकबुद्धेः पंचायामेषु उच्चवर्गे सर्वाधिकावृत्तिः अस्ति। तदनन्तरं औसतवर्गे सामान्यं तथा च निम्नवर्गे अतिन्यूनमस्ति। अत एव सेवापूर्वशिक्षकाणां भावात्मकबुद्धिः उच्चस्तरीया अस्ति। केषाञ्चित् शिक्षकाणां भावात्मकबुद्धिः औसतस्तरीया अथ च न्यूनस्तरीयाऽपि अस्ति। शिक्षकाणां उच्चस्तरीया भावात्मकबुद्धिः व्यवसायस्य सफलतायां सहाय्यं भवति।

**शैक्षिकनिहितार्थ**

शिक्षणं विद्वत्ताधारितम्भवति, अथ च विद्वता तावत् सार्थकी नास्ति यावत् सा छात्रं न संचारयति। अस्याः सफलतायाः मात्र छात्रशिक्षकयोर्मध्ये अंतःक्रियायाः प्रभावोपरि निर्भरा भवति। अनया दृष्ट्या शिक्षकस्य योग्यतया सहैव तस्मिन् भावात्मकबुद्धेः महत्यावश्यकताऽस्ति। भाविशिक्षकाः भवन्ति सेवापूर्वशिक्षकाः। भविष्ये ते कीदृशाः शिक्षकाः भविष्यन्ति विषयविशेषज्ञतया शिक्षणकौशलेन च सह तेषां भावात्मकबुद्ध्या प्रभाविता भवति। भावात्मकबुद्धिः एकाऽधिगम्या योग्यताऽस्ति। क्षमताया अस्याः प्रयोगः जीवनकौशलस्य विकासाय कर्तुं शक्यते। अस्या अवधारणायाः महत्वं साम्प्रतिकस्य युगस्य व्यावसायिकं जीवनं नूतनपरिस्थितौ सामान्यरूपेणैव द्रष्टुं शक्यते। शिक्षायाः शिक्षणस्य प्रशिक्षणस्य च व्यवस्थासु अपेक्षितस्तरस्य प्रभावोत्पादनदृष्ट्याऽपि सम्प्रत्ययोऽयमुपयोगी अस्ति। परिप्रेक्ष्येऽस्मिन् सेवापूर्वशिक्षकेषु आत्माभिज्ञतायाः, आत्मप्रबन्धनस्य, अभिप्रेरणायाः, तदनुभूतिजन्यस्य सामर्थ्यस्य, सामाजिकदक्षतायाश्च संवर्धने बलप्रदानमावश्यकम्, येन ते छात्रैस्सह सामग्रीकरूपेण व्यवहरन्तः तैः सह सामंजस्यं स्थापयेयुः। अथ च तेष्वपि उक्तगुणान् संचारयित्वा एकस्य समरससमाजस्य स्थापनां कुर्युः। भावात्मकबुद्धिः एका जन्मजातयोग्यता नास्ति। अस्याः योग्यतायाः विकासः पोषणञ्च कर्तुं शक्यते। एतदर्थं शिक्षणसंस्थाः स्वशिक्षकाणां भावात्मकबुद्धेः विकासार्थं प्रशिक्षणं दद्युः। विशेषरूपेण आत्मप्रबन्धनस्य, तद्नुभूतेः सामाजिकदक्षतानाञ्च विकासार्थं प्रशिक्षणस्य महत्यावश्यकता अस्ति। सर्वेषां शिक्षकाणां कृते एतेषां प्रशिक्षणकार्यक्रमस्य व्यवस्था भवेत येन तेषां भावात्मकबुद्धेः अभिवृद्धीकरणं सुकरं भवेत्। अध्यापकाः छात्रश्च स्वक्लेशं अवमुच्य पल्लविताः पुष्पिताश्च भवेयुः।

